THE

# MÂLAVIKÂGNIMITRA

OF

## KÂLIDÂSA.

With the Commentary of Kâtayavema.



EDITED BY

KÂS'INÂTH PÂṆḌURANG PARAB.

---

Sixth Edition.

---

REVISED BY

WÂSUDEV LAXMAṆ S'ÂSTRÎ PAṆSÎKAR.



PUBLISHED

BY

PÂNDURANG JÂWAJÎ,

PROPRIETOR OF THE "NIRNAYA-SAGAR" PRESS,

BOMBAY.

---

1924.

---

*Price 12 Annas.*

॥ श्रीः ॥

# महाकविश्रीकालिदासविरचितं

# मालविकाग्निमित्रम् ।

श्रीकाटयवेमभूपविरचितेन कुमारगिरिराजीयेन

व्याख्यानेन समेतम् ।

काशीनाथ पाण्डुरङ्ग परब इत्यनेन

संशोधितम् ।

तस्येदं षष्ठं संस्करणम् ।

पणशीकरोपाह्वलक्ष्मणशर्मतनुजनुषा वासुदेवशर्मणा

संस्कृतम् ।

तच्च

शाके १८४६ संवत्सरे

सन् 1924

मुम्बापुर्यां

पाण्डुरङ्ग जावजी,

इत्येतैः स्वीये निर्णयसागराख्यमुद्रणयन्त्रालये प्रकाशितम् ।

मूल्यं १२ आणकाः ।

अथ

# मालविकाग्निमित्रम् ।

## प्रथमोऽङ्कः ।

एकैश्वर्ये स्थितोऽपि प्रणतबहुफले यः स्वयं कृत्तिवासाः
कान्तासंमिश्रदेहोऽप्यविषयमनसां यः परस्ताद्यतीनाम् ।
अष्टाभिर्यस्य कृत्स्नं जगदपि तनुभिर्बिभ्रतो नाभिमानः
सन्मार्गालोकनाय व्यपनयतु स वस्तामसीं वृत्तिमीशः ॥ १ ॥

---

वेदादीनां विशुद्धानां विद्यानां जन्महेतवे ।
पार्वतीपरतन्त्राय परस्मै वस्तुने नमः ॥
भाग्यं नाम समग्रमीदृशमतिस्नेहैकपात्रं यतो
नीरं काटयवेममुद्धतरिपुध्वंसे नियुज्य स्वयम् ।
नित्यं नन्दति नर्तनैरभिनवैः कान्तैर्वसन्तोत्सवैः
संतानाभ्युदयैः कुमारगिरिभूपालो नृपालोत्तमः ॥

अत्र कविः कालिदासः प्रारिप्सितस्य ग्रन्थस्याविघ्नेन परिसमाप्त्यर्थमिष्टदेवतास्मरणपूर्वकमाशिषं प्रयुङ्क्ते—**एकैश्वर्य इत्यादि** । स ईशः परमेश्वरः सन्मार्गालोकनाय । सन् प्रशस्तो मार्गः पन्था मोक्षमार्गस्तस्यालोकनाय दर्शनाय वो युष्माकं तामसीं तमःसंबन्धिनीं वृत्तिं प्रवृत्तिं व्यपनयत्वपाकरोत्विति संबन्धः । कथंभूत ईशः । यः प्रणतबहुफले । बहूनि फलानि यस्मात्तत्तथोक्तम् । प्रणतानां प्रणामं कृतवताम् । भक्तानामित्यर्थः । तेषां बहुफलं तस्मिन् । एकैश्वर्ये । ईश्वरस्य भाव ऐश्वर्यम् । एकं मुख्यम् । अनन्यसाधारणमित्यर्थः । तच्च तदैश्वर्यं च । तस्मिन्स्थितोऽपि । अणिमाद्यैश्वर्ययुक्तोऽपीत्यर्थः। स्वयमात्मना कृत्तिवासाः कृत्तिश्चर्म वासो वसनं यस्य स तथोक्तः। यः कान्तासंमिश्रदेहोऽपि कान्तया स्त्रिया संमिश्रः संमिलितो देहः शरीरं यस्य स तथोक्तस्तादृशोऽपि सन् । अविषयमनसाम् । न विद्यन्ते विषयाः शब्दादयो येषां तान्यविषयाणि तानि मनांसि येषां ते तथोक्ताः तेषां यतीनां संयमिनां परस्तात्परः श्रेष्ठः । 'दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः' इत्यस्तातिप्रत्ययः। अष्टाभिस्तनुभिः पृथिव्यादिमूर्तिभिः कृत्स्नं

(नान्द्यन्ते)

**सूत्रधारः**—(नेपथ्याभिमुखमवलोक्य ।) मारिष, इतस्तावत् ।

(प्रविश्य ।)

**पारिपार्श्विकः**—भाव, अयमस्मि ।

**सूत्रधारः**—अभिहितोऽस्मि विद्वत्परिषदा कालिदासग्रथितवस्तु मालविकाग्निमित्रं नाम नाटकमस्मिन्वसन्तोत्सवे प्रयोक्तव्यमिति । तदारभ्यतां संगीतम् ।

**पारिपार्श्विकः**—मा तावत् । प्रथितयशसां भाससौमिल्लककविपुत्रादीनां प्रबन्धानतिक्रम्य वर्तमानकवेः कालिदासस्य क्रियायां कथं बहुमानः ।

**सूत्रधारः**—अयि, विवेकग्रस्तमभिहितम् । पश्य ।

---

सर्वं जगल्लोकं बिभ्रतोऽपि धारयतोऽपि यस्याभिमानः प्रणयो ममत्वं न भवति । एषु विशेषणेषु विरोधालंकारेणास्येश्वरस्य लोकातिशायित्वमुक्तं भवति । अत्र प्रणतबहुफल एकैश्वर्यस्थित्या कान्तासंमिश्रणेन जगद्धरणेन ईश इत्यनेन च लोकोत्तरः कश्चिद्राजास्मिन्नाटके वर्ण्यत इति सूच्यते । सन्मार्गालोकनायेत्यनेनात्र कश्चिन्मार्गाभिनयः प्रतिपाद्यत इति सूच्यते । मार्गो नाम नाट्यविशेषः । तथोक्तम्—'मार्गोऽपि देशी तद्भेदः कथितो नाट्यवेदिभिः । अत्र मार्गो भवेन्नाट्यं नाट्यवेदोक्तलक्षणम् ॥' इति । एष नान्दीश्लोकः । नान्द्यादिलक्षणं तु शाकुन्तलव्याख्यान एवाभिहितम् । अत्र 'पदादिनियमोऽपि वा' इति विकल्पात्पदादिनियमाभावः ॥ अथ प्रस्तावनां विवक्षुस्तदङ्गयोः प्ररोचनामुखयोः प्ररोचनां प्रस्तौति—**नान्द्यन्ते सूत्रधार इत्यादिना** । मारिष, इतस्तावत् । आगम्यतामिति शेषः । नटः सूत्रधारेण मारिष इति वाच्यः । 'सूत्री नटेन भावेति तेनासौ मारिषेति च' इत्युक्तत्वात् ॥ परिपार्श्वं यथा भवति तथा वर्तत इति पारिपार्श्विकः । नट इत्यर्थः । 'परिमुखं च' इत्यत्र चकाराट्ठक् ॥ **अभिहितोऽस्मीत्यादि** । विद्वत्परिषदा विदुषां विपश्चितां परिषत्सभा तया । अनेन सभाप्रशंसा कृता । कालिदासग्रथितवस्तु कालिदासेन ग्रथितं वस्तु कथा यस्मिंस्तत्तथोक्तम् । मालविकाग्निमित्रम् । 'अधिकृत्य कृते ग्रन्थे' इत्यण् । यथा मालतीमाधवम् । वसन्तोत्सव इत्यनेन कालनिर्देशः कृतः । संगीतं तौर्यत्रिकम् । तथा चोक्तं संगीतरत्नाकरे—'नृत्तं गीतं तथा वाद्यं त्रयं संगीतमुच्यते' इति । आरभ्यतां प्रयोक्तुं यत्नः क्रियताम् ॥ मा तावत् । मा इति निवारणे । भास-कविपुत्र-सौमिल्लकाः कवयः प्राक्तनाः । प्रबन्धान्रूपकाणि । अतिक्रम्योल्लङ्घ्य । परिहृत्येत्यर्थः । कालिदासस्य कालिदासनामधेयस्य

पुराणमित्येव न साधु सर्वं
न चापि काव्यं नवमित्यवद्यम् ।
सन्तः परीक्ष्यान्यतरद्भजन्ते
मूढः परप्रत्ययनेयबुद्धिः ॥ २ ॥

**पारिपार्श्विकः**—आर्यमिश्राः प्रमाणम् ।

**सूत्रधारः**—तेन हि त्वरतां भवान् ।

शिरसा प्रथमगृहीतामाज्ञामिच्छामि परिषदः कर्तुम् ।
देव्या इव धारिण्याः सेवादक्षः परिजनोऽयम् ॥ ३ ॥

(इति निष्क्रान्तौ ।)

---

## प्रस्तावना ।

(ततः प्रविशति बकुलावलिका ।)

**बकुलावलिका**—आणत्तम्हि[1] देवीए धारिणीए । अइरप्पउत्तोव-

---

१. आज्ञप्तास्मि देव्या धारिण्या । अचिरप्रवृत्तोपदेशं छलिकं नाम नाट्य-

---

कवेः।क्रियायां कृतौ रूपके। कथं बहुमान आदरातिशयः कथनमीक्ष्यते॥विवेकप्रस्तं विवेकदुर्बलम्। विवेकशून्यमित्यर्थः । क्रियाविशेषणं चैतत् । **पुराणमित्यादि।** सर्वं काव्यं कवेः कर्म । कृतिरित्यर्थः । पुराणमित्येव पुराणत्वादेव साधु रम्यं न भवति । नवमिति च नवत्वादेव अवद्यं गर्ह्यं न भवति । किंतु सन्तो विद्वांसः परीक्ष्य पुराणं नवं च काव्यं गुणतो दोषतश्च परामृश्य अन्यतरत्तयोरेकं पुराणं नवं वा । गुणयुक्तमित्यर्थः । भजन्ते । स्वीकुर्वन्तीत्यर्थः । मूढोऽज्ञस्तु परप्रत्ययनेयबुद्धिः परस्यान्यस्य प्रत्ययेन ज्ञानेन नेया प्राप्या बुद्धिर्यस्य स तथोक्तः । अनेन कविकाव्यप्रशंसा कृता ॥ **शिरसेत्यादि** । शिरसा मूर्ध्ना प्रथमगृहीतां पूर्वस्वीकृताम् । शिरसा ग्रहणेन भक्त्यतिशयो गम्यते । परिषदः सभाया आज्ञां शासनं कर्तुं निर्वर्तयितुमिच्छाम्यभिलषामि। अत्रोपमामाह—धारिण्या देव्याः। धारिणी नाम कथानायकस्य पत्नी। तस्या आज्ञां सेवादक्षः परिचर्यानिपुणोऽयं पुरोवर्ती परिजन इव । परिचारको जनः परिजनः । अनेन पात्राक्षेपहेतुः प्रयोगातिशयो नाम मुखाङ्गमुक्तं भवति ॥ **प्रस्तावना** ॥ कविरिदानीमङ्कमारभमाणः कथोपयोगितया प्रथमं मिश्रविष्कम्भं नामार्थोपक्षेपकं प्रस्तौति—**ततः प्रविशतीत्यादिना** । आज्ञप्तास्मि देव्या धारिण्या। अचिरप्रवृत्तोपदेशं छलिकं नाम नाट्यमन्तरेण कीदृशी मालविकेति नाट्याचार्यमार्यगणदासं प्रष्टुम् । तस्मात्तावत्संगीतशालां

देसं छलिअं णाम णट्टअं अन्तरेण कीरिसी मालविअत्ति णट्टाअरिअं अज्जगणदासं पुच्छिदुं। ता दाव संगीतसालं गच्छम्मि(इति परिक्रामति।)

(ततः प्रविशत्याभरणहस्ता द्वितीया चेटी।)

**प्रथमा**—(द्वितीयां दृष्ट्वा।) हैला कोमुदीए, कुदो दे इअं धीरदा। जं समीवेण वि अदिक्कमन्ती इदो दिट्ठिं ण देसि।

**द्वितीया**—अम्हो बउलावलिआ। सहि, इदं देवीए सिप्पिसआसादो आणीदं णाअमुद्दासणाहं अङ्गुलीअअं सिणिद्धं णिज्झाअन्ती तुह उवालम्भे पडिदम्हि।

**प्रथमा**—(विलोक्य।) ठाणे सज्जदि दिट्ठी। इमिणा अङ्गुलीअएण उब्भिण्णकिरणकेसरेण कुसुमिदो विअ दे अग्गहत्थो।

**द्वितीया**—हैला, कहिं पत्थिदा सि।

---

मन्तरेण कीदृशी मालविकेति नाट्याचार्यमार्यगणदासं प्रष्टुम्। तत्तावत्संगीतशालां गच्छामि।

१. सखि कौमुदिके, कुतस्त इयं धीरता। यत्समीपेनाप्यतिक्रामन्तीतो दृष्टिं न ददासि।

२. अहो बकुलावलिका। सखि, इदं देव्याः शिल्पिसकाशादानीतं नागमुद्रासनाथमङ्गुलीयकं स्निग्धं निध्यायन्ती तवोपालम्भे पतितास्मि।

३. स्थाने सज्जति दृष्टिः। अनेनाङ्गुलीयकेनोद्भिन्नकिरणकेसरेण कुसुमित इव तेऽग्रहस्तः।

४. 'सखि, कुत्र प्रस्थितासि।

---

गच्छामि। अन्तरेणेत्ययं निपात उद्देशार्थे वर्तते। छलिकं नाम नाट्यविशेष इत्यर्थः। तथा चोक्तम्—'तदेव च्छलिकं नाम साक्षाद्यदभिनीयते। व्यपदिश्य पुरावृत्तं स्वाभिप्रायप्रकाशकम्॥' इति॥ सखि कौमुदिके, कुतस्त इयं धीरता। यत्समीपेनाप्यतिक्रामन्तीतो दृष्टिं न ददासि॥ अहो बकुलावलिका। सखि, इदं देव्याः शिल्पिसकाशादानीतं नागमुद्रासनाथमङ्गुलीयकं स्निग्धं निध्यायन्ती पश्यन्ती तवोपालम्भे पतितास्मि॥ स्थाने सज्जति दृष्टिः। अनेनाङ्गुलीयकेनोद्भिन्नकिरणकेसरेण कुसुमित इव तेऽग्रहस्तः॥ सखि, कुत्र प्रस्थितासि॥ देव्या एव वचनेन नाटकाचार्यमार्यगणदासं

प्रथमा—देवीए एव्व वअणेण णाडआआरिअं अज्जगणदासं देक्खिदु । उवदेसग्गहणे कीरिसी मालविअत्ति ।

द्वितीया—सहि, ईरिसेण वावारेण असंणिहिदा वि सा कहं भट्टुणा दिट्ठा ।

प्रथमा—आम । सो जणो देवीए पास्सगदो चित्ते दिट्ठो ।

द्वितीया—कहं विअ ।

प्रथमा—सुणु । चित्तसालं गदा देवी पच्चग्गवण्णराअं चित्तलेहं आआरिअस्स ओलोअन्ती चिट्ठदि । भट्टा अ उवट्ठिदो ।

द्वितीया—तदो तदो ।

प्रथमा—उवआराणन्तरं एक्कासणोवविट्ठेण भट्टुणा चित्तगदाए देवीए परिअणमज्झगदं आसण्णदारिअं देक्खिअ देवी पुच्छिदा ।

द्वितीया—किं ति ।

---

१. देव्या एव वचनेन नाटकाचार्यमार्यगणदासं द्रष्टुम् । उपदेशग्रहणे कीदृशी मालविकेति ।

२. सखि, ईदृशेन व्यापरेणासंनिहितापि सा कथं भर्त्रा दृष्टा ।

३. आम । स जनो देव्याः पार्श्वगतश्चित्रे दृष्टः ।

४. कथमिव ।

५. शृणु । चित्रशालां गता देवी प्रत्यग्रवर्णरागां चित्रलेखामाचार्यस्याव-लोकयन्ती तिष्ठति । भर्ता चोपस्थितः ।

६. ततस्ततः ।

७. उपचारानन्तरमेकासनोपविष्टेन भर्त्रा चित्रगताया देव्याः परिजन-मध्यगतामासन्नदारिकां दृष्ट्वा देवी पृष्टा ।

८. किमिति ।

---

द्रष्टुम् । उपदेशग्रहणे कीदृशी मालविकेति ॥ सखि, ईदृशेन व्यापारेणासंनिहितापि सा कथं भर्त्रा दृष्टा॥आमेत्यभ्युपगमे । स जनो देव्याः पार्श्वगतश्चित्रे दृष्टः ॥कथमिव॥ शृणु।चित्रशालांगता देवी प्रत्यग्रवर्णरागां चित्रलेखामाचार्यस्यावलोकयन्ती तिष्ठति। भर्ता चोपस्थितः॥ ततस्ततः॥ उपचारानन्तरमेकासनोपविष्टेन भर्त्रा चित्रगताया देव्याः परिजनमध्यगतामासन्नदारिकां दृष्ट्वा देवी पृष्टा ॥किमिति॥अपूर्वेयं दारिका,

**प्रथमा**—[१]अपुव्वा इअं दारिआ, आसण्णा अ देवीए आलिहिदा, किंणामहेएत्ति ।

**द्वितीया**—[२]आकिदिविसेसेसु आअरो पदं करेदि । तदो तदो ।

**प्रथमा**—[३]तदो अवहीरिअवअणो भट्टा देवीं पुणो अणुबन्धिदुं सङ्किदो । तदो कुमारीए वसुलच्छीए आचक्खिदम् । अज्ज, एसा मालविअत्ति ।

**द्वितीया**—(सस्मितम्।) [४]सरिसं खु बालभावस्स । अदो वरं कहेहि ।

**प्रथमा**—[५]किं अण्णं । संवदं मालविआ सविसेसं भट्टुणो दंसण-पहादो रक्खीअदि ।

**द्वितीया**—[६]हला, अत्तणो णिओअं अणुचिट्ठ । अहं वि एदं अङ्गुलीअअं देवीए उवणइस्सम् । (इति निष्क्रान्ता ।)

**प्रथमा**—(परिक्रम्यावलोक्य ।) [७]एसो णट्टाअरिओ संगीदसालादो णिग्गच्छदि । जाव से अत्ताणं दंसेमि । (इति परिक्रामति ।)

---

१. अपूर्वेयं दारिका, आसन्ना च देव्या आलिखिता किंनामधेयेति ।

२. आकृतिविशेषेष्वादरः पदं करोति । ततस्ततः ।

३. ततोऽवधीरितवचनो भर्ता देवीं पुनरनुबन्द्धुं शङ्कितः । ततः कुमार्या वसुलक्ष्म्याख्यातम् । आर्य, एषा मालविकेति ।

४. सदृशं खलु बालभावस्य । अतः परं कथय ।

५. किमन्यत् । सांप्रतं मालविका सविशेषं भर्तुर्दर्शनपथाद्रक्ष्यते ।

६. सखि, आत्मनो नियोगमनुतिष्ठ । अहमप्येतदङ्गुलीयकं देव्यै उपनेष्यामि ।

७. एष नाट्याचार्यः संगीतशालातो निर्गच्छति । यावदस्मा आत्मानं दर्शयामि ।

---

आसन्ना च देव्या आलिखिता, किंनामधेयेति ॥ आकृतिविशेषेष्वादरः पदं करोति । ततस्ततः ॥ ततोऽवधीरितवचनो भर्ता देवीं पुनरनुबन्द्धुं शङ्कितः । ततः कुमार्या वसुलक्ष्म्याख्यातम् । आर्य, एषा मालविकेति । सदृशं खलु बालभावस्य । अतः परं कथय॥ किमन्यद् । सांप्रतं मालविका सविशेषं भर्तुर्दर्शनपथाद्रक्ष्यते ।'अपुव्वा इअं दारिआ' इत्यारभ्य 'दंसणपहादो रक्खिअदि' इत्यन्तेन वाक्यकदम्बकेन गम्यमानो मालविकागोचरो राज्ञोऽभिलाषोऽत्र नाटके बीजमित्यनुपस्थेयम् ॥ सखि, आत्मनो नियोगमनुतिष्ठ । अहमप्येतदङ्गुलीयकं देव्यै उपनेष्यामि॥एष नाट्याचार्यः

(प्रविश्य ।)

**गणदासः**—कामं खलु सर्वस्यापि कुलविद्या बहुमता । न पुनरस्माकं नाट्यं प्रति मिथ्यागौरवम् । तथा हि ।

देवानामिदमामनन्ति मुनयः शान्तं क्रतुं चाक्षुषं
रुद्रेणेदमुमाकृतव्यतिकरे स्वाङ्गे विभक्तं द्विधा ।
त्रैगुण्योद्भवमत्र लोकचरितं नानारसं दृश्यते
नाट्यं भिन्नरुचेर्जनस्य बहुधाप्येकं समाराधकम् ॥ ४ ॥

---

संगीतशालातो निर्गच्छति । यावदस्मा आत्मानं दर्शयामि ॥ **देवानामित्यादि** । मुनयो भरतमतङ्गादय इदं नाट्यं देवानामिन्द्रादीनां क्रतुं यज्ञमामनन्ति । कीदृशम् । शान्तं सौम्यम् । पशुविशसनादिरहितमित्यर्थः । पुनः कीदृशम् । चाक्षुषं चक्षुरनुभाव्यम् । अस्य नाट्यस्य क्रतुत्वनिरूपणं चतुर्वेदसारनाट्यवेदविहितकर्मत्वादिति मन्तव्यम् । तथा च कुमारसंभवे—'कर्म यज्ञः फलं स्वर्गः' इति । अत्र चतुर्वेदसारत्वं भारतीये प्रतिपादितम्—'सर्वशास्त्रार्थसंपन्नं सर्वशिल्पप्रदर्शनम् । नाट्यसंज्ञमिमं वेदं सेतिहासं करोम्यहम् ॥ एवं संकल्प्य भगवान्सर्वान्वेदाननुस्मरन् । नाट्यवेदं ततश्चक्रे चतुर्वेदाङ्गसंभवम् । जग्राह पाठ्यमृग्वेदात्सामभ्यो गीतमेव च । यजुर्वेदादभिनयान्रसानाथर्वणादपि॥वेदोपवेदसंबद्धो नाट्यवेदो महात्मना । एवं भगवता सृष्टो ब्रह्मणा ललितात्मना ॥ उत्पाद्य नाट्यवेदं तु ब्रह्मोवाच सुरेश्वरम् ॥' इति । प्रकारान्तरेणाप्यस्य क्रतुत्वं प्रतिपादितम्—'प्रयोगं यश्च कुर्वीत प्रेक्षते चावधानवान् । या गतिर्वेदविदुषां या गतिर्यज्ञयाजिनाम्।या गतिर्दानशीलानां तां गतिं प्राप्नुयान्नरः॥' इति । पुनः कीदृशमिदं नाट्यम् । रुद्रेणेश्वरेणोमाकृतव्यतिकरे उमया पार्वत्या कृतो व्यतिकरः संबन्धो यस्य स तथोक्तस्तस्मिन्स्वाङ्गे आत्मदेहे द्विधा द्विप्रकारेण लास्यताण्डवरूपेण विभक्तं पृथक्कृतम् । तथा चोक्तं संगीतविद्याविनोदे—'उद्दण्डताण्डवमुदञ्चितलास्यलीलां कर्तुं स्वयं युगपदेव समुत्सुकात्मा । यः कामिनीकलितकम्रतरार्धकायः सोऽयं विभाति विभुरादिनटः सुराणाम् ॥' अत्र नाट्ये त्रैगुण्योद्भवम् । त्रयो गुणाः सत्त्वरजस्तमांस्येव त्रैगुण्यम् । चतुर्वर्णादित्वात्स्वार्थे ष्यञ् । तस्मादुद्भवमुद्भूतं लोकचरितं लोकानां लोकस्थानां रामाद्यनुकार्याणां चरितं सुखदुःखमिश्रात्मकं चरितं नानारसं नाना बहुविधा रसाः प्रियतमोपभोग्या यस्मिंस्तत्तथोक्तं दृश्यते ज्ञायते । सामाजिकैरनुभूयत इत्यर्थः। लोकेऽनुकार्यस्य चरितं सुखदुःखमिश्रात्मकमपि नाट्यं नटेनाभिनीयमानं सत्सुखरूपेणैव प्रतीयत इति भावः। पुनः कीदृशम् । नाट्यं नटनप्रयोगः । एकमप्येकैकमपि भिन्नरुचेर्भिन्ना बहुविधा रुचयः प्रीतयो यस्य स तथोक्त-

**बकुलावलिका**—(उपेत्य ।) [१]अज्ज, वन्दामि ।

**गणदासः**—भद्रे, चिरं जीव ।

**बकुलावलिका**—[२]अज्ज, देवी पुच्छदि । अवि उवदेसग्गहणे णादिकीलिस्सदि वो सिस्सा मालविअत्ति ।

**गणदासः**—भद्रे, विज्ञाप्यतां देवी परमनिपुणा मेधाविनी चेति । किंबहुना ।

यद्यत्प्रयोगविषये भाविकमुपदिश्यते मया तस्यै ।
तत्तद्विशेषकरणात्प्रत्युपदिशतीव मे बाला ॥ ५ ॥

**बकुलावलिका**—(आत्मगतम् ।) [३]अदिक्कन्तं विअ इरावदिं पेक्खामि । (प्रकाशम् ।) किदत्था दाणिं वो सिस्सा । जाए गुरुअणो एवं तुस्सदि ।

---

१. आर्य, वन्दे ।

२. आर्य, देवी पृच्छति । अप्युपदेशग्रहणे नातिक्लिश्नाति वः शिष्या मालविकेति ।

३. अतिक्रान्तामिवेरावतीं पश्यामि । कृतार्थेदानीं वः शिष्या । यस्या गुरुजन एवं तुष्यति ।

---

स्तस्य जनस्य बहुधा बहुप्रकारेण शृङ्गारहास्यादिरूपेण समाराधकं संतर्पकम्। तथा चोक्तं भारतीये–'त्रैलोक्यस्यास्य सर्वस्य नाट्यं भावानुकीर्तनम् । धर्मो धर्मप्रवृत्तानां कामः कामोपसेविनाम् । अर्थोपजीविनामर्थो धृतिरुद्विग्नचेतसाम् ॥ नानाभावोपसंपन्नं नानावस्थान्तरात्मकम् । लोकवृत्तानुकरणं नाट्यमेतन्मया कृतम् ॥ एतद्रसेषु भावेषु सर्वकर्मक्रियासु च।सर्वोपदेशजननं नाट्यमेतद्भविष्यति॥न तज्ज्ञानं न तच्छिल्पं नासौ विद्या न सा कला । नासौ योगो न तत्कर्म नाट्येऽस्मिन्यन्न दृश्यते॥'इति॥ अर्य,वन्दे॥ आर्य,देवी पृच्छति । अप्युपदेशग्रहणे नातिक्लिश्नाति वः शिष्या मालविकेति॥ **यद्यदित्यादि**। प्रयोगविषयेऽभिनयार्थे मया तस्यै मालविकायै यद्यद्भाविकं भाववत्।'अत इनिठनौ' इति ठन्। नृत्यमित्यर्थः। यथोक्तम्–'अङ्गिकाभिनयप्रायमल्पवाचिकसात्विकम् । भावानामास्पदं नृत्यं पदार्थव्यञ्जनात्मकम् ॥' इति । उपदिश्यते बोध्यते । तत्तद्विशेषकरणात्तस्य तस्य भाविकस्य विशेषेणातिशयेन करणं निर्वर्तनं मे तस्मात्सा बाला प्रत्युपदिशतीव प्रतिबोधयतीव । अनेन तस्या नृत्ये प्रावीण्यातिशयो गम्यते॥अतिक्रान्तामिवेरावतीं पश्यामि । कृतार्थेदानीं वः शिष्या। यस्यां गुरुजन एवं तुष्यति ॥ अस्ति देव्या वर्णावरो भ्राता वीरसेनो नाम भर्त्रा

**गणदासः**—भद्रे, तद्विधानामसुलभत्वात्पृच्छामि। कुतो देव्या तत्पात्रमानीतम्।

**बकुलावलिका**—अत्थि[1] देवीए वण्णावरो भादा वीरसेणो णाम भट्टुणा णम्मदातीरे अन्तवालदुग्गे ठाविदो। तेण सिप्पाहिआरे जोग्गा इअं दारिअत्ति भणिअ भइणीए देवीए उवाअणं पेसिदा।

**गणदासः**—(स्वगतम्।) आकृतिविशेषप्रत्ययादेनामनूनवस्तुकां संभावयामि। (प्रकाशम्।) भद्रे, मयापि यशस्विना भवितव्यम्। यतः।

पात्रविशेषे न्यस्तं गुणान्तरं व्रजति शिल्पमाधातुः।
जलमिव समुद्रशुक्तौ मुक्ताफलतां पयोदस्य॥ ६॥

**बकुलावलिका**—अह इं[2]। अह कहिं वो सिस्सा।

**गणदासः**—इदानीमेव पञ्चाङ्गाभिनयमुपदिश्य मया विश्रम्यतामित्यभिहिता दीर्घिकावलोकनगवाक्षगता प्रवातमासेवमाना तिष्ठति।

---

१. अस्ति देव्या वर्णावरो भ्राता वीरसेनो नाम भर्त्रा नर्मदातीरेऽन्तपालदुर्गे स्थापितः। तेन शिल्पाधिकारे योग्येयं दारिकेति भणित्वा भगिन्या देव्या उपायनं प्रेषिता।

२. अथ किम्। अथ कुत्र वः शिष्या।

---

नर्मदातीरेऽन्तपालदुर्गे स्थापितः। तेन शिल्पाधिकारे कलाविद्याधिगम इयं योग्या दारिकेति भणित्वा भगिन्या देव्या उपायनं प्रेषिता॥ अनूनवस्तुकामनूनमनल्पं विशिष्टं वस्तु वृत्तं यस्याः सा तथोक्ता तां संभावयामि मन्ये। **पात्रविशेष इत्यादि**। आधातुरुपदेष्टुः शिल्पं कलाविद्या पात्रविशेषे विशिष्टपात्रे न्यस्तं निहितं सत् गुणान्तरं गुणविशेषं व्रजति प्राप्नोति। अत्रोपमामाह-पयोदस्य मेघस्य जलं समुद्रशुक्तौ न्यस्तं सत् मुक्ताफलतां मौक्तकत्वमिव॥ अथ किम्। अथ कुत्र वः शिष्या॥ **इदानीमित्यादि**। पञ्चाङ्गाभिनयं पञ्च अङ्गानि यस्य तत्तथोक्तम्। प्रेरणमित्यर्थः। तस्याभिनयः प्रयोगस्तमिदानीमद्यैवोपदिश्य शिक्षयित्वा। प्रवातं प्रशस्तो वातो यस्मिन्देशे स तथोक्तस्तम्। प्रेरणस्याङ्गपञ्चकमुक्तं संगीतरत्नाकरे–'नृत्तं तथा च कैवारो मर्मरो जागरं तथा। गीतं चेति समाख्यातं प्रेरणस्याङ्गपञ्चकम्॥ त्रिभिस्त्वेतत्प्रयोज्यं स्यात्कैवारं जागरं विना॥' इति। अत्र पञ्चाङ्गरूपनृत्तान्तरोपक्रमकथनेन च्छलिकं नृत्तं साकल्येन परिशीलितमिति सूच्यते। तेन हि पुनरनुजानातु मामार्यः।

**बकुलावलिका**—तेर्ण हि पुणो अणुजाणादु मं अज्जो । जाव सेभि अज्जस्स परितोसणिवेदणेण ऊसाहं वड्ढेमि ।

**गणदासः**—दृश्यतां सखी । अहमपि लब्धक्षणः स्वगृहं गच्छामि ।

(इति निष्क्रान्तौ ।)

**मिश्रविष्कम्भः ।**

(ततः प्रविशत्येकान्तस्थितपरिजनो मन्त्रिणा लेखहस्तेनान्वास्यमानो राजा ।)

**राजा**—(अनुवाचितलेखममात्यं विलोक्य ।) वाहतव, किं प्रतिपद्यते वैदर्भः ।

**अमात्यः**—देव, आत्मविनाशम् ।

**राजा**—संदेशमिदानीं श्रोतुमिच्छामि ।

**अमात्यः**—इदमिदानीमनेन प्रतिलिखितम् । पूज्येनाहमादिष्टः । पितृव्यपुत्रो भवतः कुमारो माधवसेनः प्रतिश्रुतसंबन्धो ममोपान्तिकमुपसर्पन्नन्तरा त्वदीयेनान्तपालेनावस्कन्द्य गृहीतः । स त्वया मदपेक्षया सकलत्रसोदर्यो मोक्तव्य इति । एतन्नु वो विदितम् । यत्तुल्या-

---

१. तेन हि पुनरनुजानातु मामार्यः । यावदस्या आर्यस्य परितोषनिवेदनेनोत्साहं वर्धयामि ।

---

यावदस्या आर्यस्य परितोषनिवेदनेनोत्साहं वर्धयामि॥ लब्धक्षणो लब्धः प्राप्तः क्षणो निर्व्यापारस्थितिर्विश्रमो येन स तथोक्तः स्वगृहमात्मगृहं गच्छामि ॥ **मिश्रविष्कम्भः॥ततः प्रविशतीत्यादि।** वाहतवेति तस्यामात्यस्य संज्ञा । वैदर्भो विदर्भराजः किं प्रतिपद्यते किं कार्यं मन्यते । संदेशं संदिष्टार्थं श्रोतुमिच्छामि॥ अनेन वैदर्भेणेदं प्रतिलिखितं प्रत्युत्तरत्वेनाभिलिखितम् । पूज्येन पूजार्हेण त्वया अग्निमित्रेणेत्यर्थः। अहं वैदर्भ आदिष्ट आज्ञप्तः । तमेवादेशं विवृणोति-**भवत इत्यादिना** । भवतस्तव पितृव्यपुत्रः पितृभ्रातृसुतो माधवसेनो नाम प्रतिश्रुतसंबन्धः प्रतिश्रुतोऽङ्गीकृतः संबन्धः कन्यकाप्रदानरूपो येन स तथोक्तो ममोपान्तिकं मत्समीपमुपसर्पन्नुपगच्छन्नागच्छन्नन्तरा मध्ये त्वदीयेन त्वत्संबन्धिनान्तपालेन सीमादुर्गरक्षकेणावस्कन्द्य पथिप्रहृत्य गृहीतो निरुद्धः।बन्दीकृत इत्यर्थः।समाधवसेनस्त्वया भवता मदपेक्षया मय्यपेक्षा इच्छा।स्नेह इत्यर्थः।तया हेतुना। सकलत्रसोदर्यो भार्याभगिनीसहितः। 'वोपसर्जनस्य' इति सहशब्दस्य सादेशः । मोक्तव्यो विसर्जनीयः । इतिः समाप्तौ । एतावता वैदर्भेणाग्निमित्रप्रेषितपत्रिकार्थानुवादः कृत इत्यनुसंधेयम्। इतःपरं प्रत्युत्तररूपं वैदर्भवचनमुच्यते—**एतन्नु वो विदितमित्यादि** । एतद्वक्ष्यमाणं वो युष्माकं

भिजनेषु राज्ञां वृत्तिः । अतोऽत्र मध्यस्थः पूज्यो भवितुमर्हति । सोदर्या पुनरस्य ग्रहणविप्लवे विनष्टा । तदन्वेषणाय प्रयतिष्ये । अथवा, अवश्यमेव माधवसेनो मया पूज्येन मोचयितव्यः, श्रूयतामभिसंधिः ।

मौर्यसचिवं विमुञ्चति यदि पूज्यः संयतं मम श्यालम् ।
मोक्ता माधवसेनस्ततो मया बन्धनात्सद्यः ॥ ७ ॥

इति ।

**राजा**—(सरोषम् ।) कथं कार्यविनिमयेन मयि व्यवहरत्यनात्मज्ञः। वाहतव, प्रकृत्यमित्रः प्रतिकूलकारी च मे वैदर्भः । तद्यातव्यपक्षे स्थितस्य पूर्वसंकल्पितसमुन्मूलनाय वीरसेनमुखं दण्डचक्रमाज्ञापय ।

**अमात्यः**—यदाज्ञापयति देवः ।

**राजा**—अथवा किं भवान्मन्यते ।

**अमात्यः**—शास्त्रदृष्टमाह देवः ।

अचिराधिष्ठितराज्यः शत्रुः प्रकृतिष्वरूढमूलत्वात् ।
नवसंरोपणशिथिलस्तरुरिव सुकरः समुद्धर्तुम् ॥ ८ ॥

**राजा**—तेन ह्यवितथं तन्त्रकारवचनम् । इदमेव वचनं निमित्तमुपादाय समुद्योज्यतां सेनाधिपतिः ।

---

विदितं नन्वित्यत्र काकुरनुसंधेया । तुल्याभिजनेषु समानवंशेषु । ज्ञातिष्वित्यर्थः । राज्ञां वृत्तिर्वर्तनमीदृश्येवंविधेति यत्तन्नु वो विदितमिति संबन्धः । अतोऽस्मात्कारणादत्रास्मिन्नर्थे पूज्यो भवान्मध्यस्थः समो भवितुमर्हति । अस्य माधवसेनस्य सोदर्या पुनः स्वसा पुनर्ग्रहणविप्लवे विनष्टा तिरोहिता । तदन्वेषणाय तस्या अन्वेषणाय गवेषणाय प्रयतिष्ये। अथवेति पक्षान्तरे। मोचयितव्यस्त्याजयितव्यः । अभिसंधिर्निश्चयः। **मौर्यसचिवमित्यादि** । पूज्यो भवान्संयतं त्वया निगलितं मम श्यालं पत्नीभ्रातरं मौर्यसचिवं मौर्यसचिवनामानं विमुञ्चति यदि त्यजति चेत् ततस्तस्मात्कारणान्मया सद्यः सपदि माधवसेनो बन्धनान्निगलान्मोक्ता मुक्तो भविता । मुञ्चतेः कर्मणि लुट् । इतिः लिखितार्थसमाप्तौ ॥ प्रकृत्यमित्रः स्वभावतः शत्रुः। अत्र प्रकृत्यमित्रत्वं च विषयानन्तरत्वादिति मन्तव्यम् ॥ **अचिराधिष्ठितेत्यादि** । स्पष्टोऽर्थः ॥ तेनारूढमूलत्वेन हेतुना तन्त्रकारवचनमर्थशास्त्रकारवचनमवितथं

**अमात्यः**—तथा (इति निष्क्रान्तः ।)

(परिजनो यथाव्यापारं राजानमभितः स्थितः ।)

(प्रविश्य ।)

**विदूषकः**—[1] आणत्तोम्हि तत्तभवदा रण्णा । गोदम, चिन्तेहि दाव उवाअं । जहा मे जदिच्छादिट्ठपदिकिदी मालविआ पच्चक्खदंसणा होदित्ति । मए अ तत्तहा किदं । दाव से णिवेदेमि । (इति परिक्रामति ।)

**राजा**—(विदूषकं दृष्ट्वा ।) अयमपरः कार्यान्तरसचिवोऽस्मानुपस्थितः ।

**विदूषकः**—(उपगम्य ।) [2] वड्ढदु भवं ।

**राजा**—(सशिरःकम्पम् ।) इत आस्यताम् ।

(विदूषक उपविष्टः ।)

**राजा**—अपि किंचिदुपेयोपायदर्शने व्यापृतं ते प्रज्ञाचक्षुः ।

**विदूषकः**—[3] पओअसिद्धिं पुच्छ ।

---

१. आज्ञप्तोऽस्मि तत्रभवता राज्ञा । गौतम, चिन्तय तावदुपायम् । यथा मे यदृच्छादृष्टप्रतिकृतिर्मालविका प्रत्यक्षदर्शना भवतीति । मया च तत्तथा कृतम् । तावदस्मै निवेदयामि ।

२. वर्धतां भवान् ।

३. प्रयोगसिद्धिं पृच्छ ।

---

हि सत्यमेव । भविष्यतीति शेषः। हिशब्दोऽवधारणे । 'हि हेतावधारणे' इत्यमरः । इदमेव वैदर्भस्य कार्यविनिमयरूपमेव वचनं वाक्यं निमित्तं हेतुमुपादायावलम्ब्य समुद्योज्यतां प्रत्यावर्त्यताम् ॥ आज्ञप्तोऽस्मि तत्रभवता राज्ञा । गौतम, चिन्तय तावदुपायम् । यथा मे यदृच्छादृष्टप्रतिकृतिर्मालविका प्रत्यक्षदर्शना भवतीति । मया च तत्तथा कृतम् । तावदस्मै निवेदयामि । अत्र गम्यमानं राज्ञो मालकविकादर्शनौत्सुक्यमारम्भो नाम प्रथमावस्थेति मन्तव्यम्। अत्र बीजारम्भयोः समन्वयान्मुखसंधिरित्यनुसंधेयम्॥वर्धतां भवान् ॥ उपेयोपायदर्शने उपेयस्य साध्यस्य मालविकासाक्षाद्दर्शनस्योपायदर्शने साधनज्ञाने ते प्रज्ञाचक्षुः प्रतिभादृष्टिः किंचिदीषदपि व्यापृतं प्रसृतम् । अपिः प्रश्ने । अत्र गम्यमानस्य मालविकारूपस्य बीजस्य विन्यासादुपक्षेपो नाम संध्यङ्गमुक्तं भवति ॥ प्रयोगसिद्धिं पृच्छ॥कर्णे । एवमिव । एतद्वचनं

राजा—कथमिव ।

विदूषकः—(कर्णे ।) एव्वमिव ।[1]

राजा—साधु वयस्य; निपुणमुपक्रान्तम् । इदानीं दुरधिगमसिद्धावप्यस्मिन्नारम्भे वयमाशंसामहे । कुतः ।

अर्थं सप्रतिबन्धं प्रभुरधिगन्तुं सहायवानेव ।
दृश्यं तमसि न पश्यति दीपेन विना सचक्षुरपि ॥ ९ ॥

(नेपथ्ये ।)

अलं बहु विकत्थ्य । राज्ञः समक्षमेवावयोरधरोत्तरयोर्व्यक्तिर्भविष्यति ।

राजा—(आकर्ण्य ।) सखे, त्वत्सुनीतिपादपस्य पुष्पमुद्भिन्नम् ।

विदूषकः—फलं वि अइरेण दक्खिस्ससि ।[2]

(ततः प्रविशति कञ्चुकी ।)

कञ्चुकी—देव, अमात्यो विज्ञापति अनुष्ठिता प्रभोराज्ञेति । एतौ पुनर्हरदत्तगणदासौ

उभावभिनयाचार्यौ परस्परजयैषिणौ ।
त्वां द्रष्टुमुद्यतौ साक्षाद्भावाविव शरीरिणौ ॥ १० ॥

---

१. एवमिव ।
२. फलमप्यचिरेण द्रक्ष्यसि ।

---

नियतस्य व्यापारान्तरमेयस्य गुह्यतरार्थस्य प्रयोगे कविना प्रयुक्तम् । तथोक्तम्—'कर्णे एवमिवेत्युक्त्वा ज्ञाप्यः पश्चात्प्रसङ्गतः' इति ॥ **इदानीमित्यादि** । अस्मिन्नारम्भे मालविकासाक्षाद्दर्शनोद्योगे दुरधिगमसिद्धावपि दुर्लभसिद्धौ सत्यपीदानीं त्वद्वचनश्रवणानन्तरं वयमाशंसामहे सिद्धिमपेक्षामहे ॥ **अर्थमित्यादि** । सप्रतिबन्धं सप्रतिरोधमर्थं प्रयोजनमधिगन्तुं लब्धुं सहायवानेव जनः प्रभुः समर्थो भवति । 'इदानीम्' इत्यादिना 'सहायवानेव' इत्यन्तेन तस्य बीजस्य बहुलीकरणात्परिकर इति संध्यङ्गमुक्तं भवति ॥ **नेपथ्य इत्यादि** । बहु विकत्थ्यात्मश्लाघां कृत्वालम् । अलमिति प्रतिषेधे । 'अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा' इति क्त्वाप्रत्ययः॥ फलमप्यचिरेण द्रक्ष्यसि । अत्र बीजस्य दृढीकरणात्परिन्यासो नाम संध्यङ्गमुक्तं भवति॥ **उभावित्यादि** । शरीरिणौ मूर्तौ साक्षाद्भावौ प्रत्यक्षभावाविव नृत्याभिनयार्थाविव॥

राजा—प्रवेशय ।

कञ्चुकी—यदाज्ञापयति देवः । (इति निष्क्रम्य ताभ्यां सह प्रविष्टः ।) इत इतो भवन्तौ ।

गणदासः—(राजानं विलोक्य ।) अहो दुरासदो राजमहिमा ।

न च न परिचितो न चाप्यरम्य-
श्चकितमुपैमि तथापि पार्श्वमस्य ।
सलिलनिधिरिव प्रतिक्षणं मे
भवति स एव नवो नवोऽयमक्ष्णोः ॥ ११ ॥

हरदत्तः—महत्खलु पुरुषाकारमिदं ज्योतिः । तथा हि ।

द्वारे नियुक्तपुरुषाभिमतप्रवेशः
सिंहासनान्तिकचरेण सहोपसर्पन् ।
तेजोभिरस्य विनिवर्तितदृष्टिपातै-
र्वाक्यादृते पुनरिव प्रतिवारितोऽस्मि ॥ १२ ॥

कञ्चुकी—एष देवः । उपसर्पतां भवन्तौ ।

उभौ—(उपेत्य) विजयतां देवः ।

राजा—स्वागतं भवद्भ्याम् (परिजनं विलोक्य ।) आसने तावदत्र भवतोः ।

(उभौ परिजनोपनीतयोरासनयोरुपविष्टौ ।)

राजा—किमिदं शिष्योपदेशकाले युगपदाचार्याभ्यामत्रोपस्थानम् ।

गणदासः—देव, श्रूयताम् । तीर्थादभिनयविद्या शिक्षिता । दत्तप्रयोगश्चास्मि देवेन देव्या च परिगृहीतः ।

---

**न च न परिचित इत्यादि** । अयं राजा परिचितः संस्तुतश्च न भवतीति न, किं तु परिचित एव । अरम्योऽसौम्यश्च न किं तु रम्य एव । तथापि चकितं सभयं यथा भवति तथास्य पार्श्वं समीपमुपैमि । शेषं स्पष्टम् ॥ **द्वारे नियुक्तेत्यादि** । विनिवर्तितदृष्टिपातैर्विनिवारितदृष्टिप्रसारैरस्य राज्ञस्तेजोभिः पुनःप्रकाशविशेषैस्तु वाक्यादृते प्रतिषेधवाक्यं विना प्रतिवारित इव निरुद्ध इवास्मि ॥ **तीर्थादभिनयविद्ये-**

**राजा**—बाढं जाने । ततः किम् ।

**गणदासः**—सोऽहममुना हरदत्तेन प्रधानपुरुषसमक्षमयं मे न पादरजसापि तुल्य इत्यधिक्षिप्तः ।

**हरदत्तः**—देव, अयमेव प्रथमं परिवादकरः । अत्रभवतः किल मम च समुद्रपल्वलयोरिवान्तरमिति । तदत्रभवानिमं मां च शास्त्रे प्रयोगे च विमृशतु । देव एव नौ विशेषज्ञः प्राश्निकः ।

**विदूषकः**—[1]समत्थं पइण्णादं ।

**गणदासः**—प्रथमः कल्पः । अवहितो देवः श्रोतुमर्हति ।

**राजा**—तिष्ठ यावत् । पक्षपातमत्र देवी मन्यते । तदस्याः पण्डितकौशिकीसहितायाः समक्षमेव न्याय्यो व्यवहारः ।

**विदूषकः**—[2]सुट्ठु भवं भणादि ।

**आचार्यौ**—यद्देवाय रोचते ।

**राजा**—मौद्गल्य, अमुं प्रस्तावं निवेद्य पण्डितकौशिक्या सार्ध-माहूयतां देवी ।

**कञ्चुकी**—यदाज्ञापयति देवः । (इति निष्क्रम्य सपरिव्राजिकया देव्या सह प्रविष्टः ।) इत इतो भवती ।

**धारिणी**—(परिव्राजिकां विलोक्य ।) [3]भअवदि, हरदत्तस्स गण-दासस्स अ संरम्भे कहं पेक्खसि ।

**परिव्राजिका**—अलं स्वपक्षावसादशङ्कया । न परिहीयते प्रति-वादिनो गणदासः ।

---

१. समर्थं प्रतिज्ञातम् ।

२. सुष्ठु भवान्भणति ।

३. भगवति, हरदत्तस्य गणदासस्य च संरम्भे कथं पश्यसि ।

---

**त्यादि** । तीर्थाद्विशिष्टाद्गुरोरभिनयविद्या नाट्यविद्या शिक्षिताभ्यस्ता । दत्तप्रयोगश्चास्मि । दत्तः शिष्येभ्यः प्रतिपादितः प्रयोगो विनियोगो येन स तथोक्तः ॥ समर्थं प्रतिज्ञातम् ॥ प्रथमः कल्पो मुख्यः पक्षः ॥ न्याय्यो युक्तः । व्यवहारो विवादः ॥ सुष्ठु भवान्भणति ॥ भगवति, हरदत्तस्य गणदासस्य च संरम्भे कथं पश्यसि कथं मन्यसे । अनयोः कतरस्य पराजयं विचारयसीत्यर्थः ॥ **अलं स्वपक्षे-**

**धारिणी**—जंइवि एव्वं राअपरिग्गहो से पहाणत्तणं उवहरइ।

**परिव्राजिका**—अयि, राज्ञीशब्दभाजनमात्मानमपि चिन्तयतु भवती। पश्य।

अतिमात्रभासुरत्वं पुष्यति भानोः परिग्रहादनलः।
अधिगच्छति महिमानं चन्द्रोऽपि निशापरिगृहीतः॥ १३॥

**विदूषकः**—अंइ, उअट्ठिदा देवी पीठमद्दिअं पण्डिअकोसिइं पुरोकरिअ धारिणी।

**राजा**—पश्याम्येनाम्। यैषा

मङ्गलालंकृता भाति कौशिक्या यतिवेषया।
त्रयी विग्रहवत्येव सममध्यात्मविद्यया॥ १४॥

**परिव्राजिका**—(उपेत्य।) विजयतां देवः।

**राजा**—भगवति, अभिवादये।

---

१. यद्यप्येवं राजपरिग्रहोऽस्य प्रधानत्वमुपहरति।

२. अयि, उपस्थिता देवी पीठमर्दिकां पण्डितकौशिकीं पुरस्कृत्य धारिणी।

---

**त्यादि**। अत्र परिव्राजिकायाः स्त्रीत्वात्प्राकृते प्राप्ते संस्कृताश्रयणं लिङ्गित्वादिति मन्तव्यम्। तथा चोक्तम्—'देवद्विजनरेन्द्राणां लिङ्गिनां संस्कृतं वचः' इति॥ यद्यप्येवं राजपरिग्रहोऽस्य हरदत्तस्य प्रधानत्वमुपहरति॥ **अतिमात्रभासुरत्वमित्यादि**। स्पष्टोऽर्थः॥ अयि, उपस्थिता देवी पीठमर्दिकां पण्डितकौशिकीं पुरस्कृत्य धारिणी। पीठमर्दो नाम कामपुरुषार्थसहायो नायकसमीपवर्ती पुरुषः कथ्यते। तथा चोक्तम्—'पीठमर्दः समीपस्थः कार्यालोचनकोविदः' इति। अत्र विदूषकः परिहासेन परिव्राजिकायां पण्डितकौशिक्यां तद्धर्ममारोपयतीति मन्तव्यम्॥ **मङ्गलेत्यादि**। मङ्गलालंकृता मङ्गलं शोभनं यथा भवति तथालंकृता भूषितैषा धारिणी यतिवेषया यतेः परिव्राजकस्य वेष इव वेषः काषायादिधारणं यस्याः सा तथोक्ता तया कौशिक्या समं सार्धं भाति प्रकाशते। अत्रोपमामाह—विग्रहवत्या शरीरिण्याध्यात्मविद्यया समं त्रयीव वेदत्रयीव। विग्रहवतीव विभक्तिविपरिणामेन योज-

**परिव्राजिका**—

महासारप्रसवयोः सदृशक्षमयोर्द्वयोः।
धारिणीभूतधारिण्योर्भव भर्ता शरच्छतम् ॥ १५ ॥

**धारिणी**—जेदु[1] अज्जउत्तो।

**राजा**—स्वागतं देव्यै। (परिव्राजिकां विलोक्य।) भगवति, क्रियतामासनपरिग्रहः।

(सर्वे उपविशन्ति।)

**राजा**—भगवति, अत्रभवतोर्हरदत्तगणदासयोः परस्परं विज्ञानसंघर्षिणोर्भगवत्या प्राश्निकपदमध्यासितव्यम्।

**परिव्राजिका**—(सस्मितम्।) अलमुपालम्भेन। पत्तने सति ग्रामे रत्नपरीक्षा।

**राजा**—नैतदेवम्। पण्डितकौशिकी खलु भगवती। पक्षपातिनावहं देवी च।

**आचार्यौ**—सम्यगाह देवः। मध्यस्था भगवती नौ गुणदोषतः परिच्छेत्तुमर्हति।

**राजा**—तेन हि प्रस्तूयतां विवादः।

**परिव्राजिका**—देव, प्रयोगप्रधानं हि नाट्यशास्त्रम्। किमत्र वाग्व्यवहारेण। कथं वा देवी मन्यते।

**देवी**—जइ[2] मं पुच्छसि, एदाणं विवादो एव्व ण मे रोअदि।

**गणदासः**–देव, न मां समानविद्यया परिभवनीयमवगन्तुमर्हसि।

**विदूषकः**—[3]भोदि, पेक्खामो उरब्भसंवादं। किं मुहा वेअणदाणेण।

१. जयत्वार्यपुत्रः।
२. यदि मां पृच्छसि, एतेषां विवाद एव न मे रोचते।
३. भवति, पश्याम उरभ्रसंवादम्। किं मुधा वेतनदानेन।

नीयम् ॥ **महासारेत्यादि**। महासारप्रसवयोः। महान्सारो वरः प्रसवः संतानं ययोस्ते तयोः। सदृशक्षमयोः। सदृशी समाना क्षमा सहिष्णुत्वं ययोस्ते तयोः। शेषं स्पष्टम् ॥ जयत्वार्यपुत्रः ॥ यदि मां पृच्छसि,एतयोर्विवाद एव न मे रोचते ॥ भवति,

देवी—[1]णं कलहप्पिओसि।

विदूषकः—[2]मा एव्वं। अण्णोण्णकलहप्पिआणं मत्तहत्थीणं एक्कदरस्सिं अणिज्जिदे कुदो उवसमो।

राजा—ननु स्वाङ्गसौष्ठवातिशयमुभयोर्दृष्टवती भगवती।

परिव्राजिका—अथ किम्।

राजा—तदिदानीमतः परं किमाभ्यां प्रत्याययितव्यम्।

परिव्राजिका—तदेव वक्तुकामास्मि।

श्लिष्टा क्रिया कस्यचिदात्मसंस्था
संक्रान्तिरन्यस्य विशेषयुक्ता।
यस्योभयं साधु स शिक्षकाणां
धुरि प्रतिष्ठापयितव्य एव॥ १६॥

विदूषकः—[3]सुदं अज्जेहिं भअवदीए वअणं। एसो पिण्डितत्थो उवदेसदंसणादो णिण्णओत्ति।

हरदत्तः—परमभिमतं नः।

गणदासः—देवि, एवं स्थितम्।

---

१. ननु कलहप्रियोऽसि।

२. मैवम्। अन्योन्यकलहप्रिययोर्मत्तहस्तिनोरेकतरस्मिन्ननिर्जिते कुत उपशमः।

३. श्रुतमार्याभ्यां भगवत्या वचनम्। एष पिण्डितार्थ उपदेशदर्शनान्निर्णय इति।

---

पश्याम उरभ्रसंवादम्। किं मुधा वेतनदानेन॥ ननु कलहप्रियोऽसि॥ मैवम्। अन्योन्यकलहप्रिययोर्मत्तहस्तिनोरेकतरस्मिन्ननिर्जिते कुत उपशमः॥ **श्लिष्टेत्यादि।** कस्यचित्कस्यापि पुरुषस्यापि क्रिया शिक्षा। विद्याभ्यास इत्यर्थः। आत्मसंस्था आत्मनिष्ठा सती श्लिष्टा संगता। रम्या भवतीत्यर्थः। अन्यस्य पुरुषस्य संक्रान्तिः शिष्येषु क्रियासंक्रमणम्। संक्रान्तिशब्दोऽत्रान्तर्भावितण्यर्थः। विशेषयुक्तातिशयवती। यस्य पुरुषस्योभयम्, आत्मसिद्धिः परसंक्रमणं च, साधु रम्यं स पुरुष एव शिक्षकाणामुपदेशकानां धुर्यग्रे प्रतिष्ठापयितव्यः प्रतिष्ठां प्रापयितव्यः॥ श्रुतमार्याभ्यां भगवत्यावचनम्। एष पिण्डितार्थ उपदेशदर्शनान्निर्णय इति। अत्र मालविकादर्शनसंदेहनिर्णयाद्यु-

**देवी**—[1]जदा उण मन्दमेधा सिस्सा उवदेसं मलिणेन्ति, तदा आअरिअस्स दोसो णु ।

**राजा**—देवि, एवमापद्यते । विनेतुरद्रव्यपरिग्रहोऽपि बुद्धिलाघवं प्रकाशयतीति ।

**देवी**—(स्वगतम्) [2]कहं दाणिं (गणदासं विलोक्य प्रकाशम् ।)—अलं अज्जउत्तस्स ऊसाहकारणं मणोरहं पूरिअ । विरम णिरत्थआदो आरम्भादो ।

**विदूषकः**—[3]सुट्ठु भोदी भणादि । भो गणदास, संगीदपदं लम्भिअ सरस्सईए उवाअणमोदआणं खादमाणस्स किं ते सुहणिग्गहेण विवादेण ।

**गणदासः**—सत्यसमयमेवार्थो देवीवाक्यस्य । श्रूयतामवसरप्राप्तमिदानीम् ।

लब्धास्पदोऽस्मीति विवादभीरो-
स्तितिक्षमाणस्य परेण निन्दाम् ।
यस्यागमः केवलजीविकायै
तं ज्ञानपण्यं वणिजं वदन्ति ॥ १७ ॥

---

१. यदा पुनर्मन्दमेधाः शिष्या उपदेशं मलिनयन्ति, तदाचार्यस्य दोषो नु ।

२. कथमिदानीम् । अलमार्यपुत्रस्योत्साहकारणं मनोरथं पूरयित्वा । विरम निरर्थकादारम्भात् ।

३. सुष्ठु भवती भणति । भो गणदास, संगीतपदं लब्ध्वा सरस्वत्युपायनमोदकान्खादतः किं ते सुखनिग्रहेण विवादेन ।

---

क्तिर्नाम संध्यङ्गमुक्तं भवति ॥ यदा पुनर्मन्दमेधाः शिष्या उपदेशं मलिनयन्ति, तदाचार्यस्य दोषो नु । नुः प्रश्ने ॥ कथमिदानीम् । अलमार्यपुत्रस्योत्साहकारणं मनोरथं पूरयित्वा विरम निरर्थकादारम्भात् ॥ सुष्ठु भवती भणति । भो गणदास, संगीतपदं लब्ध्वा सरस्वत्युपायनमोदकान्खादतः किं ते सुखनिग्रहेण विवादेन ॥ **लब्धास्पदोऽस्मीत्यादि** । स्पष्टोऽर्थः ॥ अचिरोपनीतायां शिष्यायां पुनःप्रतिष्ठितस्योप-

**देवी**—अइरोवणीदाए[1] सिस्साए उण पडिट्ठिदस्स उवदेसस्स अण्णाय्यं पआसणं ।

**गणदासः**—अत एव मे निर्बन्धः ।

**देवीः**—तेण[2] हि दुवेवि उवदेसं भअवदीए दंसेध ।

**परिव्राजिका**—देवि, नैतन्न्याय्यम् । सर्वज्ञस्याप्येकाकिनो निर्णयाभ्युपगमो दोषाय ।

**देवी**—(जनान्तिकम् ।) मूढे[3] परिव्वाजिए, मं जाग्गरंतिंपि सुत्तं विअ करेसि । (इति सासूयं परावर्तते ।)

(राजा देवीं परिव्राजिकायै दर्शयति ।)

**परिव्राजिका**—

अनिमित्तमिन्दुवदने किमत्र भवतः पराङ्मुखी भवसि ।
प्रभवन्त्योऽपि हि भर्तृषु कारणकोपाः कुटुम्बिन्यः ॥ १८ ॥

**विदूषकः**—णं[4] सकारणं एव्व । अत्तणो पक्खो रक्खिदव्वो । (गणदासं विलोक्य) दिट्ठिआ कोवव्वाजेण देवीए परित्तादो भवं । सुसिक्खिदो वि सव्वो उवदेसेण णिण्हादो होदि ।

**गणदासः**—देवि, श्रूयताम् । एवं जनो गृह्णाति । तदिदानीम्

---

१. अचिरोपनीतायां शिष्यायां पुनः प्रतिष्ठितस्योपदेशस्यान्याय्यं प्रकाशनम् ।

२. तेन हि द्वावप्युपदेशं भगवत्यै दर्शयतम् ।

३. मूढ परिव्राजिके, मां जाग्रतीमपि सुप्तामिव करोषि ।

४. ननु सकारणमेव । आत्मनः पक्षो रक्षितव्यः । दिष्ट्या कोपव्याजेन देव्या परित्रातो भवान् । सुशिक्षितोऽपि सर्व उपदेशेन निष्णातो भवति ।

---

देशस्यान्याय्यं प्रकाशनम् । तेन हि द्वावप्युपदेशं भगवत्यै दर्शयतम् ॥ मूढे परिव्राजिके, मां जाग्रतीमपि सुप्तामिव करोषि ॥ **अनिमित्तमित्यादि** स्पष्टोऽर्थः ॥ ननु सकारणमेव आत्मनः पक्षो रक्षितव्यः । दिष्ट्या कोपव्याजेन देव्या परित्रातो भवान् । सुशिक्षितोऽपि सर्व उपदेशेन निष्णातो भवति । अत्र देवीकोपेन वस्तुविच्छेदे प्राप्ते विदूषककृतं प्रोत्साहनमुत्तराङ्गोपयोगित्वेनाविच्छेदकारणत्वाद्बिन्दुरित्यनु-

विवादे दर्शयिष्यामि क्रियासंक्रान्तिमात्मनः ।
यदि मां नानुजानासि परित्यक्तोऽस्म्यहं त्वया ॥ १९ ॥

(आसनादुत्थातुमिच्छति ।)

**देवी**—(स्वगतम् ।) [1]का गई । (प्रकाशम् ।) पहवदि आअरिओ सिस्सजणस्स ।

**गणदासः**—चिरमपदे शङ्कितोऽस्मि । (राजानमवलोक्य ।) अनुज्ञातं देव्या । तदाज्ञापयतु देवः कस्मिन्नभिनयवस्तुन्युपदेशं दर्शयिष्यामि ।

**राजा**—यदादिशति भगवती ।

**परिव्राजिका**—किमपि देव्या मनसि वर्तते । ततः शङ्कितास्मि ।

**देवी**—[2]भण वीसद्धं । पहवदि पहू अत्तणो परिअणस्स ।

**राजा**—मम चेति ब्रूहि ।

**देवी**—[3]भअवदि, भणेदाणीम् ।

**परिव्राजिका**—देव, शर्मिष्ठायाः कृतिं चतुष्पदोत्थं छलिकं दुष्प्रयोज्यमुदाहरन्ति । तत्रैकार्थसंश्रयमुभयोः प्रयोगं पश्यामि । तावता ज्ञायत एवात्रभवतोरुपदेशान्तरम् ।

**आचार्यौ**—यदाज्ञापयति भगवती ।

**विदूषकः**—[4]तेण हि दुवेवि वग्गा पेक्खाघरे संगीदरअणं करिअ तत्तभवदो दूदं पेसअह । अहवा मुदङ्गसद्दो एव्व णो उत्थावइस्सदि ।

---

१. का गतिः । प्रभवत्याचार्यः शिष्यजनस्य ।

२. भण विस्रब्धम् । प्रभवति प्रभुरात्मनः परिजनस्य ।

३. भगवति, भणेदानीम् ।

४. तेन हि द्वावपि वर्गौ प्रेक्षागृहे संगीतरचनां कृत्वा तत्रभवतो दूतं प्रेषयतम् । अथवा मृदङ्गशब्द एव न उत्थापयिष्यति ।

---

संधेयम् ॥ **विवाद इत्यादि** । स्पष्टोऽर्थः ॥ का गतिः प्रभवत्याचार्यः शिष्यजनस्य॥ भण विस्रब्धम् । प्रभवति प्रभुरात्मनः परिजनस्य॥ भगवति, भणेदानीम् ॥ तेन हि द्वावपि वर्गौ प्रेक्षागृहे संगीतरचनां कृत्वा तत्रभवतो दूतं प्रेषयतम्।अथवा मृदङ्गशब्द

**हरदत्तः**—तथा । (इत्युत्तिष्ठति ।)

(गणदासो धारिणीमवलोकयति ।)

**देवी**—(गणदासं विलोक्य ।) विअई होहि ।[1]

(आचार्यौ प्रस्थितौ)

**परिव्राजिका**—इतस्तावत् ।

**आचार्यौ**—(परिवृत्य ।) इमौ स्वः ।

**परिव्राजिका**—निर्णयाधिकारे ब्रवीमि । सर्वाङ्गसौष्ठवाभिव्यक्तये विगतनेपथ्ययोः पात्रयोः प्रवेशोऽस्तु ।

**उभौ**—नेदमावयोरुपदेश्यम् । (इति निष्क्रान्तौ ।)

**देवी**—(राजानमवलोक्य ।) जंइ राअकज्जेसु ईरिसी उवाअणिउणदा अज्जउत्तस्स, तदो सोण्हं भवे ।[2]

**राजा**—

अलमन्यथा गृहीत्वा न खलु मनस्विनि मया प्रयुक्तमिदम् ।
प्रायः समानविद्याः परस्परयशःपुरोभागाः ॥ ३० ॥

(नेपथ्ये मृदङ्गध्वनिः । सर्वे कर्णं ददति ।)

**परिव्राजिका**—हन्त । प्रवृत्तं संगीतम् । तथा ह्येषा

जीमूतस्तनितविशङ्किभिर्मयूरैरुद्ग्रीवैरनुरसितस्य पुष्करस्य ।
निर्ह्रादिन्युपहितमध्यमस्वरोत्था मायूरी मदयति मार्जना मनांसि ॥ ३१ ॥

---

१. विजयी भव ।

२. यदि राजकार्येष्वीदृश्युपायनिपुणतार्यपुत्रस्य, ततः शोभनं भवेत् ।

---

एव न उत्थापयिष्यति ॥ विजयी भव ॥ **सर्वाङ्गेत्यादि**। अत्र गुणवत्त्वस्य गम्यमानत्वादिलोचनं नाम संध्यङ्गमुक्तं भवति ॥ यदि राजकार्येष्वीदृश्युपायनिपुणतार्यपुत्रस्य, ततः शोभनं भवेत्। अत्र गूढार्थोद्भेदनादुद्भेदो नाम संध्यङ्गमुक्तं भवति ॥ **अलमन्यथा गृहीत्वेत्यादि**। स्पष्टोऽर्थः ॥ **जीमूतस्तनितेत्यादि**। जीमूतस्तनितविशङ्किभिर्जीमूतस्य स्तनितं गर्जितं विशङ्कन्त इति तथोक्तास्तैरुद्ग्रीवैरुत्कण्ठैर्मयूरैः शिखण्डिभिरनुरसितस्यानुध्वनितस्य पुष्करस्य वाद्यभाण्डमुखस्य मायूरी मयूरप्रिया मार्जना मनांसि मदयति हर्षयति। कीदृशी मार्जना। उपहितमध्यमस्वरोत्था उपहितो योजितो मध्यमस्वरो मध्यमसंज्ञकस्वरस्तस्मादुत्तिष्ठत्युदेतीति तथोक्ता। निर्ह्रादिन्यतिशयनिनादा। मार्जना नाम पुष्करवाद्यनामविशेषः।

राजा—देवि, तस्याः सामाजिका भवामः ।

देवी—(स्वगतम् ।) अहो अविणओ अज्जउत्तस्स[1] ।

(सर्वे उत्तिष्ठन्ति ।)

विदूषकः—(अपवार्य ।) भो, धीरं गच्छह्म[2] । तत्तभोदी धारिणी विसंवादइस्सदि ।

राजा—

धैर्यावलम्बिनमपि त्वरयति मां मुरजवाद्यरागोऽयम् ।
अवतरतः सिद्धिपथं शब्दः स्वमनोरथस्येव ॥ २२ ॥

(इति निष्क्रान्ताः सर्वे ।)

इति प्रथमोऽङ्कः ।

---

१. अहो अविनय आर्यपुत्रस्य ।
२. भोः, धीरं गच्छामः । तत्रभवती धारिणी विसंवादयिष्यति ।

---

तथोक्तं भारतीये—'षोडशाक्षरसंपन्नं चतुर्मार्गं तथैव च ॥ द्विलेपनं षट्करणं त्रियति त्रिलयं तथा । त्रिगतं त्रिप्रचारं च त्रिसंयोगं त्रिपाणिकम् ॥ दशार्धपाणिप्रहतं त्रिप्रहारं त्रिमार्जनम् । एभिरङ्गैस्तु संपन्नं वाद्यं पुष्करजं भवेत् ॥' तत्र 'मायूरि चार्धमायूरी तथा कार्मारवीति च । तिस्रस्तु मार्जना ज्ञेयाः पुष्करेषु स्वराश्रयाः ॥ गान्धारो वामके कार्यः षड्जो दक्षिणपुष्करे । मध्यमश्चोर्ध्वगः कार्यो मायूर्यास्तु स्वरास्त्वमी ॥ वामके पुष्करे षड्ज ऋषभो दक्षिणे तथा । धैवतश्चोर्ध्वगोत्रार्धमायूर्यां निर्दिशेद्बुधः ॥ ऋषभः पुष्करे वामे षड्जो दक्षिणपुष्करे । पञ्चमश्चोर्ध्वगः कार्यः कार्माराख्याः स्वरा अमी ॥' इति ॥ अहो, अविनय आर्यपुत्रस्य ॥ भोः, धीरं गच्छामः । तत्रभवती धारिणी विसंवादयिष्यति ॥ **धैर्यावलम्बिनमित्यादि** । अयं मुरजवाद्यरागो मुरजवाद्यस्य रञ्जकत्वं धैर्यावलम्बिनमपि मां त्वरयति संभ्रमयति । सिद्धिपथं सिद्धिमार्गमवतरतः प्राप्नुवतः स्वमनोरथस्यात्मवाञ्छितस्य शब्द इव ध्वनिरिव । अत्र बीजस्य पुनरावर्तनात्समाधानं नाम संध्यङ्गमुक्तं भवति । अत्रैव सुखागमस्य गम्यमानत्वात्प्राप्तिर्नाम संध्यङ्गमुक्तं भवति । अत्रोपक्षेपादिषु संध्यङ्गेषु कतिचिदेव कविनोक्तानि नेतराणि तथापि न दोषः । 'न्यूनमप्यत्र यैः कैश्चिदङ्गैर्नाट्यं न दुष्यति । यद्युपात्तेषु संपत्तिराराधयति तद्विदः ॥' इति वचनात् । अत्र नृत्यदर्शननिश्चयान्ते प्रथमाङ्कार्थे समाप्तेऽपि तमसमाप्यैवोत्तराङ्कादौ विष्कम्भादौ प्रतिपाद्यायाः संगीतरचनाया अत्रैव निपातनादङ्कावतरणं नामार्थोपक्षेपकमुक्तं भवति । यथोक्तम्—'अङ्कावतारस्त्वङ्कान्ते पात्रेणाङ्कस्य सूचनात्' इति ॥ **इति श्रीकाटयवेमभूपविरचिते कुमारगिरिराजीये मालविकाग्निमित्रव्याख्याने प्रथमोऽङ्कः ॥**

---

## द्वितीयोऽङ्कः ।

(ततः प्रविशति संगीतरचनायामासनस्थो राजा सवयस्यो धारिणी परिव्राजिका विभवतश्च परिवारः ।)

**राजा**—भगवति, अत्रभवतोराचार्ययोः प्रथमं कतरस्योपदेशं द्रक्ष्यामः ।

**परिव्राजिका**—ननु समानेऽपि ज्ञानवृद्धभावे वयोवृद्धत्वाद्गणदासः पुरस्कारमर्हति ।

**राजा**—मौद्गल्य, एवमत्रभवतोरावेद्य नियोगमशून्यं कुरु ।

**कञ्चुकि**—यदाज्ञापयति देवः । (इति निष्कान्तः ।)

(प्रविश्य ।)

**गणदासः**—देव, शर्मिष्ठायाः कृतिर्लयमध्या चतुष्पदास्ति । तस्याश्चतुर्थवस्तुनः प्रयोगमेकमनाः श्रोतुमर्हति देवः ।

**राजा**—आचार्य, बहुमानादवहितोऽस्मि ।

(निष्कान्तो गणदासः ।)

**राजा**—(जनान्तिकम् ।) वयस्य,

नेपथ्यपरिगतायाश्चक्षुर्दर्शनसमुत्सुकं तस्याः ।
संहर्तुमधीरतया व्यवसितमिव मे तिरस्करिणीम् ॥ १ ॥

---

कविरिदानीमङ्कान्तरं प्रस्तौति—**ततः प्रविशतीत्यादि**। 'भगवति, अत्रभवतोः' इत्यादिना 'गणदासः पुरस्कारमर्हति' इत्यन्तेन प्रतीयमानं राज्ञ उपायतो मालविकादर्शनप्रवर्तनं प्रयत्नो नाम द्वितीयावस्थितिरिति मन्तव्यम् । अत्र बिन्दुप्रयत्नयोः समन्वयात्प्रतिमुखसंधिरित्यनुसंधेयम् ॥ **देव, शर्मिष्ठाया इत्यादि**। शर्मिष्ठा नाम वृषपर्वणो राक्षसराजस्य दुहिता। तस्याः कृतिः काव्यम् । लयमध्या लयेन तालकालेन मध्या मध्यमानयुक्ता । चतुष्पदा चत्वारि पदानि खण्डानि यस्याः सा तथोक्ता । तस्याः कृतिसंबन्धिनश्चतुर्थवस्तुनश्चतुर्थस्य तुर्यस्य वस्तुनः प्रबन्धस्य प्रयोगमभिनयमेकमना अवहितः सन् श्रोतुमर्हति । अत्र श्रृङ्गारस्य प्रतिपाद्यमानत्वाल्लयमध्येत्युक्तम् । तथा चोक्तं भारतीये—'श्रृङ्गारहास्ययोर्मध्यलयः । करुणे विलम्बितः । वीररौद्राद्भुतबीभत्सभयानकेषु द्रुतः ॥ '**नेपथ्यपरिगताया इति**। नेपथ्यपरिगताया यावनिकान्तरस्थितायास्तस्या मालविकाया दर्शनसमुत्सुकमवलोकनोत्कण्ठितं मे चक्षुरधीरतया तरलतया तिरस्करिणीं

**विदूषकः**—(अपवार्य ।) उवट्ठिदं णअणमहु संणिहिदमक्खिअं च । ता अप्पमत्तो दाणिं पेक्ख ।

(ततः प्रविशत्याचार्यावेक्ष्यमाणाङ्गसौष्ठवा मालविका ।)

**विदूषकः**—(जनान्तिकम् ।) पेक्खदु भवं । ण खु से पडिच्छन्दादो परिहिअदि महुरदा ।

**राजा**—(अपवार्य ।) वयस्य,

चित्रगतायामस्यां कान्तिविसंवादशङ्कि मे हृदयम् ।
संप्रति शिथिलसमाधिं मन्ये येनेयमालिखिता ॥ २ ॥

**गणदासः**—वत्से, मुक्तसाध्वसा सत्त्वस्था भव ।

**राजा**—(आत्मगतम् ।) अहो सर्वस्थानानवद्यता रूपविशेषस्य । तथाहि ।

---

१. उपस्थितं नयनमधु संनिहितमक्षिकं च । तदप्रमत्त इदानीं पश्य ।

२. पश्यतु भवान् । न खल्वस्याः प्रतिच्छन्दात्परिहीयते मधुरता ।

---

यवनिकां संहर्तुमपनेतुं व्यवसितमिवोद्युक्तमिव । अत्रेष्टार्थविषयेच्छाया गम्यमानत्वाद्विलासो नाम संध्यङ्गमुक्तं भवति ॥ उपस्थितं नयनमधु संनिहितमक्षिकं च । तस्मादप्रमत्त इदानीं पश्य ॥ **ततः प्रविशतीत्यादि** । आचार्यावेक्ष्यमाणाङ्गसौष्ठवा आचार्येण गणदासेनावेक्ष्यमाणमङ्गानां सौष्ठवं यस्याः सा तथोक्ता । सौष्ठवं नामाङ्गानां शोभनावस्था । यथोक्तम्—'अनुचनीचचलतामङ्गानां समपादताम् । कटिकूर्परशीर्षांसकण्ठानां समरूपताम् ॥ रम्यां प्रतीकविश्रान्तिमुरसश्च समुन्नतिम् । अभ्यासोपहितामाहुः सौष्ठवं नृत्यवेदिनः ॥' पश्यतु भवान् । न खल्वस्याः प्रतिच्छन्दात्परिहियते मधुरता ॥ अत्रापवार्येत्येतन्नियतश्राव्यार्थभेदस्यापवारितस्य विवक्षितत्वे कविना प्राक्प्रयुक्तमिति मन्तव्यम् । यथोक्तं वसन्तराजीये—'अर्थस्त्वेकेन विज्ञेयो नियतश्राव्य इष्यते । द्विविधः स परिज्ञेयो जनान्तश्चापवारितः ॥' अत्र 'परैरलक्ष्यव्यापारं कथितोऽर्थोऽपवारितः । उक्त्वा प्रागपवार्येति पश्चादेनं प्रयोजयेत् ॥' इति ॥ **चित्रगतायामित्यादि** । मे हृदयं मनश्चित्रगतायामालेख्यगतायामस्यां मालविकायां कान्तिविसंवादशङ्कि कान्तेः शोभाया विसंवादं विपर्यासं शङ्कत इति तथोक्तम् । संप्रतीदानीम् । साक्षाद्दर्शनवेलायामित्यर्थः । इयं मालविका येन चित्रकारेणालिखिता तं चित्रकारं शिथिलसमाधिं शिथिलप्रयत्नं मन्ये जानामि ॥ मुक्तसाध्वसा परित्यक्तभया । सभाकम्प-

दीर्घाक्षं शरदिन्दुकान्ति वदनं बाहू नतावंसयोः
संक्षिप्तं निबिडोन्नतस्तनमुरः पार्श्वे प्रमृष्टे इव ।
मध्यः पाणिमितो नितम्बि जघनं पादावरालाङ्गुली
छन्दो नर्तयितुर्यथैव मनसि श्लिष्टं तथास्या वपुः ॥ ३ ॥

**मालविका**—(उपगानं कृत्वा चतुष्पदवस्तु गायति ।)

दुल्लहो[1] पिओ मे तस्सिं भव हिअअ णिरासं
अह्मो अपङ्गवो मे परिप्फुरइ किं पि वामो ।
एसो सो चिरदिट्ठो कहँ उण उवणइदव्वो
णाह मं पराहीणं तुइ परिगणअ सतिण्हम् ॥ ४ ॥

(ततो यथारसमभिनयति ।)

१. दुर्लभः प्रियो मे तस्मिन्भव हृदय निराश-
महो अपाङ्गो मे परिस्फुरति किमपि वामः ।
एष स चिरदृष्टः कथं पुनरुपनेतव्यो
नाथ मां पराधीनां त्वयि परिगणय सतृष्णाम् ॥

रहितेत्यर्थः । सत्त्वस्था सत्त्वगुणयुक्ता । अविकृता भवेत्यर्थः । यथोक्तम्—'चित्तस्याविकृतिः सत्त्वं विकृतेः कारणे सति' इति । अत्र विकृतिकारणं नायकसंनिधिः ॥ अहो इत्याश्चर्ये । सर्वस्थानानवद्यता सर्वेषु स्थानेषु सर्वावयवेष्वनवद्यता निर्दोषता । रमणीयतेत्यर्थः । **दीर्घाक्षमित्यादि** । वदनं मुखं दीर्घाक्षं दीर्घे आयते अक्षिणी लोचने यस्य तत्तथोक्तम् । शरदिन्दुकान्ति शरदिन्दोः शरच्चन्द्रस्य कान्तिरिव कान्तिर्यस्य तत्तथोक्तम् । बाहू भुजावंसयोः स्कन्धयोर्नतौ नम्रौ । मध्योऽवलग्नं पाणिमितः पाणिना हस्तेन मितः परिमितः । जघनं नितम्बि नितम्बातिशययुक्तम् । पादौ चरणावरालाङ्गुली अराला आकुञ्चिता अङ्गुल्यो ययोस्तौ तथोक्तौ । अस्या मालविकाया वपुः शरीरं नर्तयितुर्नृत्ताचार्यस्य छन्दोऽभिप्रायो यथा यादृशस्तथा तेन प्रकारेण श्लिष्टं संगतम् । अनेन नर्तक्या नृत्तारम्भोचितावस्थानविशेष उक्तः । तथा चोक्तं वसन्तराजीये—'अङ्गस्य चतुरस्रत्वं समपादौ लताकरौ । आरम्भे सर्वनृत्तानामेतत्सामान्यमिष्यते ॥' इति ॥ उपगानं रागदीप्तं कृत्वा चतुष्पदवस्तु चतुष्पदसंज्ञकं प्रबन्धं गायति वस्त्विति प्रबन्धः । 'प्रबन्धो रूपकं वस्तु निबन्धस्याभिधात्रयम्' इत्युक्तत्वात् । दुर्लभः प्रियो मे तस्मिन्भव हृदय निराशम् । अहो अपाङ्गो मे परिस्फुरति किमपि वामः । एष स चिरदृष्टः कथं पुनरुपनेतव्यः । नाथ मां पराधीनां त्वयि परिगणय सतृष्णाम् ॥ ततो गानानन्तरं यथारसं रसानुकूलमभिनयति । अत्र रसोऽयोगविप्रलम्भश्शृङ्गारः ।

**विदूषकः**—(जनान्तिकम् ।) [1]भो, चउप्पदवत्थुअं दुवारीकरिअ तुइ उवट्ठाविदो अप्पा तत्तहोदीए ।

**राजा**—सखे, एवमेव ममापि हृदयम् । अनया खलु

जनमिममनुरक्तं विद्धि नाथेति गेये
वचनमभिनयन्त्याः स्वाङ्गनिर्देशपूर्वम् ।
प्रणयगतिमदृष्ट्वा धारिणीसंनिकर्षा-
दहमपि सुकुमारप्रार्थनाव्याजमुक्तः ॥ ५ ॥

( मालविका गीतान्ते निष्क्रमितुमारब्धा ।)

---

१. भोः; चतुष्पदवस्तुकं द्वारीकृत्य त्वय्युपस्थापित आत्मा तत्रभवत्या ।

---

यथोक्तम्—'अप्राप्तिर्विप्रलम्भः स्याद्यूनोर्जाताभिलाषयोः । विप्रलम्भस्य भेदाः स्युरयोगो विरहस्ततः ॥ प्रवासः शापः करुणा मानश्चेति च षण्मताः॥' तत्र । 'संप्राप्ते प्रागसङ्गो यस्तमयोगं प्रचक्षते' इति । अत्र चतुष्पद्याः पादचतुष्टये क्रमेण निर्वेदः सविस्मयो हर्षश्चिन्ता दैन्यं चेति संचारिभावास्तत्तदनुभावैर्मुखरागादिभिः सम्यक्प्रकाशिता इत्यनुसंधेयम् । तेषां लक्षणमुक्तं वसन्तराजीये—'इष्टार्थविरहव्याधिनिन्दासदनमानसैः । दारिद्र्यसंताननाशपरवृद्ध्यवलोकनैः । निष्फलत्वमतिर्नृणां निर्वेदो जीवितादिषु ॥' अत्रेष्टार्थविरहजनितो निर्वेदः । 'अन्तर्बाष्पोपमध्याननिःश्वासस्यावमाननैः । दैन्यगद्गदवैवर्ण्यैरभिनेयो भवेदयम् ॥ हर्षो मनःसमुल्लासो गुरुदेवमहीभुजाम् । प्रसादात्प्रियसङ्गाच्च भवेदिष्टार्थलाभतः ॥' अत्रेष्टार्थलाभजनितो हर्षः । अपाङ्गस्फुरणस्येष्टार्थलाभहेतुत्वात् । 'मुखे नेत्रे प्रसन्नत्वात्प्रियोक्तिपुलकोद्गमः । दानत्यागपरीरम्भैरभिनेयो भवेदयम् ॥ इष्टालाभादिष्टनाशादनिष्टाप्तेश्च दैन्यतः । चित्तस्यैकाग्रता चिन्ता' । अत्र चिन्तेष्टालाभजनिता । 'स्मरणं चानुपस्मृतिः॥ संतापोच्छ्वासनिश्वासा मान्द्यमिन्द्रियकर्मणाम् । अधोमुखत्वमित्याद्यैरभिनेयो भवेदयम् ॥ अनौजस्त्वं तु मनसो दैन्यमित्यभिधीयते । मनःसंतापदारिद्र्यचिन्तौत्सुक्यादिभिर्भवेत् ॥' अत्रौत्सुक्यजनितं दैन्यम् । 'अङ्गानामपि शैथिल्यं देहसंस्कारवर्जनम् । अश्चितं भरतेऽस्मिन्वै अनुभावाः प्रदर्शिताः॥' इति ॥ भोः, चतुष्पदवस्तुकं द्वारीकृत्य त्वय्युपस्थापित आत्मा तत्रभवत्या ॥ **जनमिमभित्यादि** । नाथ स्वामिन्, इमं जनम् । मामित्यर्थः । अनुरक्तं स्निग्धम् । त्वयीति शेषः । विद्धि जानीहि । इत्येवंविधे गेये गीते । वचनं 'णाह मं पराहीणं' इत्यादिवाक्यं स्वाङ्गनिर्देशपूर्वमात्मशरीरप्रदर्शनपूर्वं यथा भवति तथाभिनयन्त्या हस्तादिभिः प्रकाशीकुर्वत्या अनया मालविकया धारिणीसंनिकर्षाद्विहितां प्रणयगतिं मम स्नेहप्रवृत्तिमदृष्ट्वा ज्ञात्वा । अनुभावानामप्रकाशनादिति भावः । सुकुमारप्रार्थनाव्याजं सुकुमारा मृ-

**विदूषकः**—भोदि[1], चिट्ठ किंचि । वो विसुमरिदो कम्म भेदो । तं दाव पुच्छिस्सम् ।

**गणदासः**—भद्रे, उपदेशविशुद्धा यातुमर्हसि ।

(मालविका निवृत्य स्थिता ।)

**राजा**—(आत्मगतम् ।) अहो, सर्वास्ववस्थासु चारुता शोभान्तरं पुष्यति । तथा हि ।

वामं संधिस्तिमितवलयं न्यस्य हस्तं नितम्बे
कृत्वा श्यामाविटपसदृशं स्रस्तमुक्तं द्वितीयम् ।
पादाङ्गुष्ठालुलितकुसुमे कुट्टिमे पातिताक्षं
नृत्तादस्याः स्थितमतितरां कान्तमृज्वायतार्धम् ॥ ६ ॥

**देवी**—[2]णं गोदमवअणं वि अज्जो हिअए करेदि ।

**गणदासः**—देवि, मा मैवम् । दैवप्रत्ययात्संभाव्यते सूक्ष्मदर्शिता गौतमस्य ।

मन्दोऽप्यमन्दतामेति संसर्गेण विपश्चितः ।
पङ्कच्छिदः फलस्येव निकषेणाविलं पयः ॥ ७ ॥

---

१. भवति, तिष्ठ किंचित् । वो विस्मृतः कर्मभेदः । तं तावत्प्रक्ष्यामि
२. ननु गौतमवचनमप्यार्यो हृदये करोति ।

---

दुला । रसनीयेत्यर्थः । सा चासौ प्रार्थना सैव व्याजोऽपदेशो यस्मिन्कर्मणि तत्तथोक्तम् । अहमुक्त इवोदित इव ॥ भवति, तिष्ठ किंचित्क्षणमात्रम् । वो विस्मृतः कर्मभेदः । तं तावत्प्रक्ष्यामि ॥ **वाममित्यादि** । संधिस्तिमितवलयं संधौ मणिबन्धे स्तिमितं निश्चलं वलयं कङ्कणं यस्य स तथोक्तः । तं वामं सव्यं हस्तं नितम्बे न्यस्य निधाय । श्यामाविटपसदृशं फलिनीशाखासंनिभं द्वितीयं दक्षिणं हस्तं स्रस्तमुक्तं स्रस्तं शिथिलं यथा भवति तथा मुक्तं विसृष्टम् । लम्बितमित्यर्थः । कृत्वा विधाय । पादाङ्गुष्ठालुलितकुसुमे पादाङ्गुष्ठेनालुलितमामृष्टं कुसुमं यस्य तत्तथोक्तं तस्मिन्कुट्टिमे । स्फटिकादिखचितस्थले पातिते व्यापारिते अक्षिणी यस्मिन्कर्मणि तथोक्तम् । ऋज्वायतार्धम् ऋजु अवक्रमायतं दीर्घं अर्धं शरीरस्योर्ध्वभागो यस्य तत्तथोक्तम् । अस्याः स्थितमवस्थानं नृत्तान्नर्तनादतितरामत्यर्थं कान्तं मनोहरं भवति । अत्र वाक्यस्य विशेषितत्वात्पुष्पं नाम संध्यङ्गमुक्तं भवति ॥ ननु गौतमवचनमप्यार्यो हृदये करोति ॥ **मन्दोऽप्यमन्दतामेतीति** । स्पष्टोऽर्थः । अस्य वाक्यस्योपप-

(विदूषकं विलोक्य ।) ततः शृणुमो वयं विवक्षितमार्यस्य ।

**विदूषकः**—(गणदासं विलोक्य ।) [1]कोसिइं दाव पुच्छ । पच्छा जो मए कम्मभेदो दिट्ठो तं भणिस्सं ।

**गणदासः**—भगवति, यथादृष्टमभिधीयताम् । गुणो वा दोषो वा ।

**परिव्राजिका**—यथादृष्टं सर्वमनवद्यम् । कुतः ।

अङ्गैरन्तर्निहितवचनैः सूचितः सम्यगर्थः
पादन्यासो लयमनुगतस्तन्मयत्वं रसेषु ।
शाखायोनिर्मृदुरभिनयस्तद्विकल्पानुवृत्तौ
भावो भावं नुदति विषयाद्रागबन्धः स एव ॥ ८ ॥

**गणदासः**—देवः कथं वा मन्यते ।

**राजा**—वयं स्वपक्षे शिथिलाभिमानाः संवृत्ताः ।

**गणदासः**—अद्य नर्तयितास्मि ।

---

१. कौशिकीं तावत्पृच्छ । पश्चाद्यो मया कर्मभेदो दृष्टस्तं भणिष्यामि ।

---

त्तिमत्त्वादुपन्यासो नाम संध्यङ्गमुक्तं भवति । कौशिकीं तावत्पृच्छ । पश्चाद्यो मया कर्मभेदो दृष्टस्तं भणिष्यामि ॥ **अङ्गैरित्यादि** । अन्तर्निहितवचनैरन्तर्निहितान्यभ्यन्तरस्थापितानि वचनानि पदानि यैस्तैरङ्गैर्हस्तादिभिः । अत्राभ्यासपाटवादङ्गानां स्वत एवान्तर्निहितवचनत्वमुत्प्रेक्षितमिति मन्तव्यम् । अर्थो गीतार्थः सम्यक् साधु । सूचितः प्रकाशितः । पादन्यासः पादस्य न्यासो विन्यासः । लयमनुगतोऽनुसृतः । लयो नाम तालमानम् । 'तालवर्ती तु यः कालः स काललयनाल्लयः' इत्युक्तत्वात् । अत्र पादन्यासस्य स्वतो लयानुसरणमभ्यासपाटवादिति मन्तव्यम् । रसेषु रसविषयेषु तन्मयत्वं तादात्म्यम् । रसात्मता भवतीत्यर्थः । अत्र रसशब्देनोपचारात्परितोषातिशयवत्त्वादिभावाः कथ्यन्ते । प्रकृतरसस्यैकत्वाद्रसेष्विति बहुवचनानुपपत्तिप्रसङ्गात् । अभिनयः प्रयोगः । यथोक्तम्—'प्रयोगो यस्तु नाट्यादेर्भवेदभिनयो हि सः' इति । शाखायोनिः शाखा योनिः प्रभवो यस्य स तथोक्तस्तथाविधः सन् । मृदुः सुकुमारः । शाखा नाम नृत्तहस्तानां मानप्रचारः । यथोक्तम्—'शाखा तु नृत्तहस्तानां या मात्रोचितनर्तना' इति । तद्विकल्पानुवृत्तौ तस्याभिनयस्य विकल्पो भेदस्तस्यानुवृत्तिरनुगतिः प्राप्तिः । तस्यां सत्यां भावः अभिनीयमानो निर्वेदादिर्विषयादाश्रयात् । प्रकृतात्स्थान इत्यर्थः । भावं

उपदेशं विदुः शुद्धं सन्तस्तमुपदेशिनः ।
श्यामायते न युष्मासु यः काञ्चनमिवाग्निषु ॥ ९ ॥

**देवी**—दिट्ठिआ[1] अपरिक्खदाराहणेण अज्जो वड्ढइ ।

**गणदासः**—देवीपरिग्रह एव वृद्धिहेतुः । (विदूषकं विलोक्य ।) गौतम, वदेदानीं यत्ते मनसि वर्तते ।

**विदूषकः**—पुढमोपदेसदंसणे[2] पुढमं बह्मणस्स पूआ कादव्वा । सा णं वो विसुमरिदा ।

**परिव्राजिका**—अहो प्रयोगाभ्यन्तरः प्रश्नः ।

(सर्वे प्रहसिताः ।)

(मालविका स्मितं करोति ।)

**राजा**—(आत्मगतम् ।) उपात्तसारश्चक्षुषा मे स्वविषयः । यदनेन

स्मयमानमायताक्ष्याः किंचिदभिव्यक्तदशनशोभि मुखम् ।
असमग्रलक्ष्यकेसरमुच्छ्वसदिव पङ्कजं दृष्टम् ॥ १० ॥

**गणदासः**—महाब्राह्मण, न खलु प्रथमं नेपथ्यप्रदर्शनमिदम् । अन्यथा कथं त्वामर्चनीयं नार्चयिष्यामः ।

**विदूषकः**—मँए[3] णाम मुद्धचादएण विअ सुक्खघणगज्जिदे

१. दिष्ट्यापरिक्षताराधनेनार्यो वर्धते ।

२. प्रथमोपदेशदर्शने प्रथमं ब्राह्मणस्य पूजा कर्तव्या । सा ननु वो विस्मृता ।

३. मया नाम मुग्धचातकेनेव शुष्कघनगर्जितेऽन्तरिक्षे जलपानमिष्टम् । अथवा पण्डितसंतोषप्रत्यया ननु मूढजातिः । यतोऽत्रभवत्या शोभनं भणितं ततोऽस्यै इदं पारितोषिकं प्रयच्छामि ।

पूर्वाभिनीतं संचारिणं नुदत्यपाकरोति । रागबन्धो रञ्जनत्वयोगः स एव । पूर्वं यादृशस्तादृश एवेत्यर्थः ॥ **उपदेशं विदुरित्यादि** । उपदेशिनः शिक्षकस्य । युष्मासु युष्मादृशेषु । विवेकिष्वित्यर्थः । न श्यामायते न मलिनीभवति । 'लोहितादिडाज्भ्यः क्यष्' । 'वा क्यषः' इति विकल्पादात्मनेपदम् ॥ दिष्ट्या अपरिक्षताराधनेनार्यो वर्धते ॥ प्रथमोपदेशदर्शने प्रथमं ब्राह्मणस्य पूजा कर्तव्या । सा ननु वो विस्मृता । अत्र परिहासस्य गम्यमानत्वान्नर्मेति संध्यङ्गमुक्तं भवति ॥ **स्मयमानमित्यादि** । स्पष्टोऽर्थः । मया नाम मुग्धचातकेनेव शुष्कघनगर्जितेन्त-

अन्तरिक्खे जलपाणं इच्छिदं । अहवा पण्डिदसंतोसपच्चया णं मूढजादी जदो अत्तहोदीए सोहणं भणिदं तदो से इमं पारितोसिअं पअच्छामि । (इति राज्ञो हस्तात्कटकमाकर्षति ।)

देवी—चिट्ठ दाव । गुणन्तरं आणन्तो किंणिमित्तं तुमं आहरणं देसि ।

विदूषकः—परकेरअंति करिअ ।

देवी—(आचार्यं विलोक्य ।) अज्ज गणदास, दंसिदोवदेसा दे सिस्सा ।

गणदासः—वत्से, प्रतिष्ठस्वेदानीम् ।

(मालविका स्नेहाचार्येण निष्क्रान्ता ।)

विदूषकः—(जनान्तिकम् ।) एत्तिओ मे मादिविहवो भवन्तं सेविदुं ।

राजा—अलमलं परिच्छेदेन । अहं हि

भाग्यास्तमयमिवाक्ष्णोर्हृदयस्य महोत्सवावसानमिव ।
द्वारपिधानमिव धृतेर्मन्ये तस्यास्तिरस्करणम् ॥ ११ ॥

---

१. तिष्ठ तावत् । गुणान्तरमजानन्किंनिमित्तं त्वमाभरणं ददासि ।
२. परकीयमिति कृत्वा ।
३. आर्य गणदास, दर्शितोपदेशा ते शिष्या ।
४. एतावान्मे मतिविभवो भवन्तं सेवितुम् ।

---

रिक्षे जलपानमिष्टम् । अथवा पण्डितसंतोषप्रत्यया ननु मूढजातिः । यतोऽत्रभवत्या शोभनं भणितं ततोऽस्यै इदं पारितोषिकं प्रयच्छामि ॥ तिष्ठ तावत् । गुणान्तरमजानन्किंनिमित्तं त्वमाभरणं ददासि ॥ परकीयमिति कृत्वा ॥ आर्य गणदास, दर्शितोपदेशा ते शिष्या । अनेन मालविकानिर्गमनहेतुना देवीवचनेन राज्ञो हितरोधनान्निरोधो नाम संध्यङ्गमुक्तं भवति ॥ एतावान्मे मतिविभवो भवन्तं सेवितुम् ॥ **भाग्यास्तमयमित्यादि** । तस्या मालविकायास्तिरस्करणं तिरोधानमक्ष्णोर्नेत्रयोर्भाग्यास्तमयमिव भागस्य भागधेयस्यास्तमयमिव नाशमिव। हृदयस्य मनसो महोत्सवस्यावसानमन्तमिव । धृतेः प्रीतेर्द्वारपिधानमिव द्वारस्य प्रवेशमार्गस्य पिधानं तिरोधानमिव । मन्ये संभावयामि। अत्रार्तेर्गम्यमानत्वाद्वि-

**विदूषकः**—(जनान्तिकम् ।) [१]दलिद्दो विअ आदुरो वेज्जेण ओसदं दीअमाणं इच्छसि ।

(प्रविश्य ।)

**हरदत्तः**—देव, मदीयमिदानीं प्रयोगमवलोकयितुं क्रियतां प्रसादः ।

**राजा**—(आत्मगतम् ।) अवसितो दर्शनार्थः । (दाक्षिण्यमवलम्ब्य प्रकाशम् ।) ननु पर्युत्सुका एव वयम् ।

**हरदत्तः**—अनुगृहीतोऽस्मि ।

(नेपथ्ये ।)

**वैतालिकः**—जयतु जयतु देवः । उपारूढो मध्याह्नः । तथा हि ।

पत्रच्छायासु हंसा मुकुलितनयना दीर्घिकापद्मिनीनां
सौधान्यत्यर्थतापाद्वलभिपरिचयद्वेषिपारावतानि ।
बिन्दुक्षेपान्पिपासुः परिसरति शिखी भ्रान्तिमद्वारियन्त्रं
सर्वैरुस्रैः समग्रस्त्वमिव नृपगुणैर्दीप्यते सप्तसप्तिः ॥ १२ ॥

**विदूषकः**—[२]अविहा अविहा । अह्माणं उण भोअणवेला उवट्ठिदा । उइदवेलादिक्कमे चिइच्छआ दोसं उदाहरन्ति । (हरदत्तं विलोक्य ।) किं दाणिं भणसि ।

**हरदत्तः**—नास्ति वचनस्यान्यस्यावकाशोऽत्र ।

**राजा**—तेन हि त्वदीयमुपदेशं श्वो वयं द्रक्ष्यामः । विश्राम्यतु भवान् ।

**हरदत्तः**—यदाज्ञापयति देवः । (इति निष्क्रान्तः ।)

---

१. दरिद्र इवातुरो वैद्येनौषधं दीयमानमिच्छसि ।

२. अविध अविध । अस्माकं पुनर्भोजनवेलोपस्थिता । उचितवेलातिक्रमे चिकित्सका दोषमुदाहरन्ति । किमिदानीं भणसि ।

---

श्रुतं नाम संध्यङ्गमुक्तं भवति ॥ दरिद्र इवातुरो वैद्येनौषधं दीयमानमिच्छसि ॥ **पत्रच्छायेत्यादि** । स्पष्टोऽर्थः ॥ अविध अविध । अस्माकं पुनर्भोजनवेलोपस्थिता । उचितवेलातिक्रमे चिकित्सका दोषमुदाहरन्ति । किमिदानीं भणसि ॥

**देवी**—णिंव्वट्टेदु अज्जउत्तो मज्जणविहिम् ।

**विदूषकः**—भोदि, विसेसेण पाणभोअणं तुवरावेहि ।

**परिव्राजिका**—(उत्थाय ।) स्वस्ति भवते (इति सपरिजनया देव्या सह निष्क्रान्ता ।)

**विदूषकः**—भो वअस्स, ण केवलं रूवे, सिप्पेवि अद्दुदीआ मालविआ ।

**राजा**—वयस्य,

अव्याजसुन्दरीं तां विज्ञानेन ललितेन योजयता ।
परिकल्पितो विधात्रा बाणः कामस्य विषदिग्धः ॥ १३ ॥

किं बहुना । सखे, चिंतयिन्तव्योऽसि ।

**विदूषकः**—भवदावि अहं । दिढं विपणिकन्दु विअ मे उअरब्भन्तरं दज्झइ ।

**राजा**—एवमेव भवान्सुहृदर्थेऽपि त्वरताम् ।

**विदूषक**—गहीदो खणो । किं तु मेहावलीणिरुद्धा जोण्हा विअ पराहीणदंसणा तत्तहोदी । भवं वि सूणापरिसरचरो विअ

१. निर्वर्तयत्वार्यपुत्रो मज्जनविधिम् ।

२. भवति, विशेषेण पानभोजनं त्वरय ।

३. भो वयस्य, न केवलं रूपे, शिल्पेऽप्यद्वितीया मालविका ।

४. भवताप्यहम् । दृढं विपणिकन्दुरिव म उदराभ्यन्तरं दह्यते ।

५. गृहीतः क्षणः । किं तु मेघावलीनिरुद्धा ज्योत्स्नेव पराधीनदर्शना तत्रभवती । भवानपि सूनापरिसरचर इव विहङ्ग आमिषलोलुपो भीरुकश्च । तदनातुरो भूत्वा कार्यसिद्धिं प्रार्थयमानो मे रोचसे ।

निर्वर्तयत्वार्यपुत्रो मज्जनविधिम् ॥ भवति, विशेषेण पानभोजनं त्वरय ॥ भो वयस्य, न केवलं रूपे, शिल्पेऽप्यद्वितीया मालविका ॥ **अव्याजसुन्दरीमित्यादि** । ललिते सुभगेन विज्ञानेन संगीतकलापरिज्ञानेन ॥ भवताप्यहम् । दृढं विपणिकन्दुरिव म उदराभ्यन्तरं दह्यते । विपणिकन्दुर्नाम पण्यवीथिकायां पिष्टपचनपात्रम् । 'कन्दुर्वा स्वेदनी स्त्रियाम्' इत्यमरः ॥ **एवमेवेत्यादि** । एवमेवेत्थमेव । यथा भवान्भोजनरूपे स्वकार्ये त्वरते तथा सुहृदर्थे मदर्थे मालविका पुनर्दर्शने त्वरताम् । अत्र दृष्टनष्टस्य बीजस्यानुसर्पणात्परिसर्प इति संध्यङ्गमुक्तं भवति ॥ गृहीतः क्षणः । किं तु मेघावलीनिरुद्धा ज्योत्स्नेव पराधीनदर्शना

विहंगो आमिसलोलुओ भीरुओ अ। ता अणादुरो भविअ कज्जसिद्धिं पत्थेन्तो मे रोअसि।

**राजा**—कथमनातुरो भविष्यामि।

सर्वान्तःपुरवनिताव्यापारप्रतिनिवृत्तहृदयस्य।
सा वामलोचना मे स्नेहस्यैकायनीभूता ॥ १४ ॥

(इति निष्क्रान्ताः सर्वे।)

**इति द्वितीयोऽङ्कः।**

---

तत्रभवती। भवानपि सूनापरिसरचर इव विहङ्ग आमिषलोलुपो भीरुकश्च। तस्मादनातुरो भूत्वा कार्यसिद्धिं प्रार्थयमानो मे रोचसे। अत्र सान्त्वनस्य गम्यमानत्वात्पर्युपासनं नाम संध्यङ्गमुक्तं भवति ॥ **सर्वान्तःपुरेत्यादि।** यत्स्नेहस्य प्रेम्ण एकायनीभूता। एकं केवलमयनं स्थानम्। आश्रय इत्यर्थः। तद्भूता। अत्राङ्के मालविकाया निष्क्रमणेन कथाविच्छेदे सति सर्वान्तःपुरेत्यादिना गम्यमानो राज्ञोऽभिलाषातिशय उत्तराङ्ककथाहेतुत्वाद्बिन्दुरित्यनुसंधेयम् ॥ **इति श्रीकाटयवेमभूपविरचिते कुमारगिरिराजीये मालविकाग्निमित्रव्याख्याने द्वितीयोऽङ्कः ॥**



## तृतीयोऽङ्कः ।

(ततः प्रविशति परिव्राजिकायाः परिचारिका समाहितिका ।)

**समाहितिका**—[1]आणत्तह्मि भअवदीए । समाहिदिए, देवीए उवायणत्थं बीअऊरअं गेण्हिय आअच्छत्ति । जाव पमदवणपालिअं महुअरिअं अण्णेसामि । (परिक्रम्यावलोक्य ।) एसा तवणीआसोअं ओलोअन्ती चिट्ठदि । जाव णं उवसप्पामि ।

(ततः प्रविशत्युद्यानपालिका ।)

**प्रथमा**—(उपसृत्य ।) [2]महुअरिए, अवि सुहो दे उज्जाणवावारो ।

**द्वितीया**—[3]अह्मो समाहिदिआ । सहि, साअदं ते ।

**समाहितिका**—[4]हला, भगवदी आणवेदि । अरित्तपाणिणा अह्मारिसजणेण तत्तहोदी देवी देक्खिदव्वा । ता बीअपूरएण सुस्सूसिदुं इच्छामित्ति ।

**मधुकरिका**—[5]णं संणिहिदं बीजपूरअं । कहेहि दाव अ-

---

१. आज्ञप्तास्मि भगवत्या । समाहितिके, देव्या उपायनार्थं बीजपूरकं गृहीत्वागच्छेति । यावत्प्रमदवनपालिकां मधुकरिकामन्विष्यामि । एषा तपनीयाशोकमवलोकयन्ती तिष्ठति । यावदेनामुपसर्पामि ।

२. मधुकरिके, अपि सुखस्त उद्यानव्यापारः ।

३. अहो समाहितिका । सखि, स्वागतं ते ।

४. सखि, भगवत्याज्ञापयति । अरिक्तपाणिनास्मादृशजनेन तत्रभवती देवी द्रष्टव्या । तद्बीजपूरकेण शुश्रूषितुमिच्छामीति ।

५. ननु संनिहितं बीजपूरकम् । कथय तावदन्योन्यसंघर्षितयोर्नाट्याचार्ययोरुपदेशं दृष्ट्वा कतरो भगवत्या प्रशंसितः ।

---

कविरिदानीमङ्कान्तरमारभमाणः कथासंघटनार्थं प्रथमं प्रवेशकं नामार्थोपक्षेपकं प्रस्तौति—**ततः प्रविशतीत्यादिना** ॥ आज्ञप्तास्मि भगवत्या । समाहितिके, देव्या उपायनार्थं बीजपूरकं गृहीत्वागच्छेति । यावत्प्रमदवनपालिकां मधुकरिकामन्विष्यामि । एषा तपनीयाशोकमवलोकयन्ती तिष्ठति । यावदेनामुपसर्पामि ॥ मधुकरिके, अपि सुखस्त उद्यानव्यापारः । अहो समाहितिका । सखि, स्वागतं ते ॥ सखि, भगवत्याज्ञापयति । अरिक्तपाणिनास्मादृशजनेन तत्रभवती देवी द्रष्टव्या ।

ण्णोण्णसंघरिसिदाणं णट्टाअरिआणं उवदेसं देक्खिअ कदरो भअ-
वदीए पसंसिदो ।

**समाहितिका**—[1]दुवेवि किल आअमिणा पओअणिउणा अ।
किंतु सिस्सागुणविसेसेण मालविआए उवदेसो पसंसिदो ।

**मधुकरिका**—[2]अह मालविआगदं कोलीणं किंति सुणीअदि ।

**समाहितिका**—[3]दिढं किल तस्सिं साहिलासो भट्टा । किंतु केवलं धारिणीए चित्तं रक्खन्तो पहुत्तणं दसेदि । मालविआवि इमेसु दिअहेसु अणुहूदमुत्ता विअ मालदीमाला मिलाणा लक्खि-अदि । अदो वरं ण जाणे । विसज्जेहि मं ।

**मधुकरिका**—[4]एदं साहावलम्बिदं बीअपूरअं गेण्ह ।

**समाहितिका**—[5]तह । (इति नाट्येन बीजपूरकं गृहीत्वा ।) हला तुमं वि अदो पेसलदरं साहुजणसुस्सूसाए फलं पावेहि । (इति प्र-स्थिता ।)

---

१. द्वावपि किलागमिनौ प्रयोगनिपुणौ च । किंतु शिष्यागुणविशेषेण मालविकाया उपदेशः प्रशंसितः ।

२. अथ मालविकागतं कौलीनं किमिति श्रूयते ।

३. दृढं किल तस्यां साभिलाषो भर्ता । किंतु केवलं धारिण्याश्चित्तं रक्षन्प्रभुत्वं दर्शयति । मालविकाप्येषु दिवसेष्वनुभूतमुक्तेव मालतीमाला म्लाना लक्ष्यते । अतः परं न जाने । विसृज माम् ।

४. एतच्छाखावलम्बितं बीजपूरकं गृहाण ।

५. तथा । सखि, त्वमप्यतः पेशलतरं साधुजनशुश्रूषायाः फलं प्राप्नुहि ।

---

तस्माद्बीजपूरकेण शुश्रूषितुमिच्छामीति ॥ ननु संनिहितं बीजपूरकम् । कथय तावदन्योन्यसंघर्षितयोर्नाट्याचार्ययोरुपदेशं दृष्ट्वा कतरो भगवत्या प्रशंसितः॥ द्वावपि किलागमिनौ प्रयोगनिपुणौ च । किंतु शिष्यागुणविशेषेण मालविकाया उपदेशः प्रशंसितः ॥ अथ मालविकागतं कौलीनं लोकवार्ता किमिति श्रूयते ॥ दृढं किल तस्यां साभिलाषो भर्ता किंतु केवलं धारिण्याश्चित्तं रक्षन्प्रभुत्वं दर्शयति । मालविकाप्येषु दिवसेष्वनुभूतमुक्तेव मालतीमाला म्लाना लक्ष्यते । अतः परं न जाने । विसृज माम् ॥ एतच्छाखावलम्बितं बीजपूरकं गृहाण ॥ तथा । सखि, त्वमप्यतः पेशलतरं साधुजनशुश्रूषायाः फलं प्राप्नुहि ॥ सखि, सममेव गच्छावः । अहमप्यस्य चिरायमा-

**मधुरिका**—हला[1], समं एव गच्छह्म। अहं वि इमस्स चिराअमाणकुसुमोग्गमस्स तवणीआसोअस्स दोहलनिमित्तं देवीए विण्णावेमि।

**समाहितिका**—जुज्जइ[2]। अहिआरो क्खु तुह।

(इति निष्क्रान्ते)

**इति प्रवेशकः।**

(ततः प्रविशति कामयमानावस्थो राजा विदूषकश्च।)

**राजा**—(आत्मानं विलोक्य।)

शरीरं क्षामं स्यादसति दयितालिङ्गनसुखे
भवेत्सास्रं चक्षुः क्षणमपि न सा दृश्यत इति।
तया सारङ्गाक्ष्या त्वमसि न कदाचिद्विरहितं
प्रसक्ते निर्वाणे हृदय परितापं व्रजसि किम्॥ १॥

**विदूषकः**—अलं[3] भवदो धीरं उज्झिअ परिदेविदेण। दिट्ठा मए तत्तहोदीए मालविआए पिअसही बउलावलिआ। सुणाविदो अअं अत्थो जो भवदा संदिट्ठो।

---

१. सखि सममेव गच्छावः। अहमप्यस्य चिरायमाणकुसुमोद्गमस्य तपनीयाशोकस्य दोहदनिमित्तं देव्यै विज्ञापयामि।

२. युज्यते। अधिकारः खलु तव।

३. अलं भवतो धीरतामुज्झित्वा परिदेवितेन। दृष्टा मया तत्रभवत्या मालविकायाः प्रियसखी वकुलावलिका। श्रावितोऽयमर्थो यो भवता संदिष्टः।

---

णकुसुमोद्गमस्य तपनीयाशोकस्य दोहदनिमित्तं देव्यै विज्ञापयामि॥ युज्यते। अधिकारः खलु तव॥ इति प्रवेशकः॥ **ततः प्रविशतीत्यादि।** कामयमानावस्थः। कामयमानानां कामिनामवस्थेवावस्था दशा यस्य स तथोक्तः॥ **शरीरमित्यादि।** दयितालिङ्गनसुखे प्रियाभिष्वङ्गसौख्येऽसत्यविद्यमाने सति शरीरं वपुःक्षामं स्यात्कृशं भवेत्। क्षणमपि क्षणमात्रमपि सा मालविका न दृश्यत इति न लक्ष्यत इति चक्षुः सास्रं सबाष्पं भवेत्स्यात्। हे हृदय चित्त, सारङ्गाक्ष्या हरिणनेत्रया तया मालविकया कदाचिज्जातुचिद्विरहितं वियुक्तं नासि न भवसि। अतस्तस्मात्कारणान्निर्वाणे सुखे

**राजा**—ततः किमुक्तवती ।

**विदूषकः**—[1]विण्णावेहि । अणुगहीदह्मि इमिणा णिओएण । किंतु सा तवस्सिणी देवीए अहिअं रक्खन्तीए णाअरक्खिदो विअ णिही ण सुहं समासादइदव्वा । तहवि घटइस्सं ति ।

**राजा**—भगवन् संकल्पयोने, प्रतिबन्धवत्सु चापि विषयेष्वभिनिवेशकारी किं तथा प्रहरसि यथा जनोऽयं न कालान्तरक्षमो भवति । (सविस्मयम् ।)

क रुजा हृदयप्रमाथिनी
क च ते विश्वसनीयमायुधम् ।
मृदु तीक्ष्णतरं यदुच्यते
तदिदं मन्मथ दृश्यते त्वयि ॥ २ ॥

**विदूषकः**—[2]णं भणामि तस्सिं साहणिज्जे किदो उवक्खेओ । पज्जवत्थावेदु भवं अप्पाणं ।

**राजा**—अथेमं दिवसशेषमुचितव्यापारविमुखेन चेतसा क नु खलु यापयामि ।

---

१. विज्ञापय । अनुगृहीतास्म्यनेन नियोगेन । किंतु सा तपस्विनी देव्याधिकं रक्षन्त्या नागरक्षित इव निधिर्न सुखं समासादयितव्या । तथापि घटयिष्यामीति ।

२. ननु भणामि तस्मिन्साधनीये कृतः उपक्षेपः । पर्यवस्थापयतु भवानात्मानम् ।

---

प्रसक्ते प्रस्तुते सति किं किमर्थं परितापं संतापं व्रजसि प्राप्नोषि ॥ अलं भवतो धीरतामुज्झित्वा परिदेवितेन । दृष्टा मया तत्रभवत्या मालविकायाः प्रियसखी बकुलावलिका । श्राविताेऽयमर्थो यो भवता संदिष्टः ॥ विज्ञापय । अनुगृहीतास्म्यनेन नियोगेन । किंतु सा तपस्विनी देव्याधिकं रक्षन्त्या नागरक्षित इव निधिर्न सुखं समासादयितव्या । तथापि घटयिष्यामिति । अत्र तपस्विनीति करुणापात्रमुच्यते । 'तपस्वी करुणापात्रम्' इति हलायुधः । अत्र प्राप्तिसंभावनया प्राप्त्याशा नाम तृतीयावस्था सूचिता । अनया प्राप्त्याशया विन्दोःसमन्वयाद्गर्भसंधिरिति मन्तव्यम् ॥ क रुजेत्यादि । स्पष्टोऽर्थः ॥ ननु भणामि तस्मिन्साधनीये कृत उपक्षेपः । पर्य-

**विदूषकः**—अज्ज एव्व पुढमावदारसुहआणि रत्तकुरवआणि उवाअणं पेसिअ णववसन्तावदारव्ववदेसेण इरावदीए णिउणिआमुहेण पत्थिदो भवं । इच्छामि अज्जउत्तेण सह दोलाहिरोहणं अणुहविदुं ति । भवदावि से पडिण्णादं । ता पमदवणं एव्व गच्छम्ह ।

**राजा**—न क्षममिदम् ।

**विदूषकः**—केहं विअ ।

**राजा**—वयस्य, निसर्गनिपुणाः स्त्रियः । कथमन्यसंक्रान्तहृदयमुपलालयन्तमपि ते सखी न मां लक्षयिष्यति । अतः पश्यामि ।

उचितः प्रणयो वरं विहन्तुं
बहवः खण्डनहेतवो हि दृष्टाः ।
उपचारविधिर्मनस्विनीनां
न तु पूर्वाभ्यधिकोऽपि भावशून्यः ॥ ३ ॥

---

१. अद्यैव प्रथमावतारसुभगानि रक्तकुरवकाण्युपायनं प्रेष्य नववसन्तावतारव्यपदेशेनेरावत्या निपुणिकामुखेन प्रार्थितो भवान् । इच्छाम्यार्यपुत्रेण सह दोलाधिरोहणमनुभवितुमिति । भवताप्यस्यै प्रतिज्ञातम् । तत्प्रमदवनमेव गच्छावः ।

२. कथमिव ।

---

वस्थापयतु भवानात्मानम् । अत्र 'कृत उपक्षेपः' इत्यनेन कपटोपायकल्पनाया गम्यमानत्वेनाभूताहरणं नाम संध्यङ्गमुक्तं भवति ॥ अद्यैव प्रथमावतारसुभगानि रक्तकुरवकाण्युपायनं प्रेष्य नववसन्तावतारव्यपदेशेनेरावत्या निपुणिकामुखेन प्रार्थितो भवान् इच्छाम्यार्यपुत्रेण सह दोलाधिरोहणमनुभवितुमिति । भवताप्यस्यै प्रतिज्ञातम् । तस्मात्प्रमदवनमेव गच्छावः ॥ कथमिव ॥ **उचित इति** । प्रणय इरावत्याः प्रार्थना विहन्तुं प्रतिषेद्धुमुचितोऽर्हो वरं मनाक्प्रियम् । अयं पक्षः किंचित्साधुरित्यर्थः । हि यस्मात्कारणात्खण्डनहेतव ईर्ष्याकोपकारणानि बहवोऽनेके दृष्टा मया लक्षिताः । खण्डनहेतुदर्शनेऽप्युपचारविशेषैः प्रलोभ्यतामित्यत आह—**उपचारेति** । भावशून्यः प्रेमरहितं उपचारविधिरिष्टाचरणं पूर्वाभ्यधिकोऽपि पूर्वस्मादुपचारविधेरतिशयितो मनस्विनीनां तु प्रशस्तमनसां पुनः । विवेकवतीनामित्यर्थः । उपचारविधिर्न भवति । किंत्वपचारविधिरित्यर्थः । अत्र नञर्थस्तद्विरोधः ॥

**विदूषकः**—[1]णारिहदि भवं अन्तेउरपडिट्ठिदं दक्खिणण्णं एक्क पदे पिट्ठदो कादुम् ।

**राजा**—(विचिन्त्य ।) तेन हि प्रमदवनमार्गमादेशय ।

**विदूषकः**—[2]इदो इदो भवं ।

(उभौ परिक्रामतः ।)

**विदूषकः**—[3]एदं पमदवणं पवणदरचलाहिं पल्लवङ्गुलीहिं तुवरेदि विअ भवन्तं पवेसिदुं ।

**राजा**—(स्पर्शसुखं रूपयित्वा ।) अभिजातः खलु वसन्तः । सखे, पश्य ।

आमत्तानां श्रवणसुभगैः कूजितैः कोकिलानां
सानुक्रोशं मनसिजरुजः सह्यतां पृच्छतेव ।
अङ्गे चूतप्रसवसुरभिर्दक्षिणो मारुतो मे
सान्द्रस्पर्शः करतल इव व्यापृतो माधवेन ॥ ४ ॥

**विदूषकः**—[4]पविस णिव्वुदि लाहाअ ।

(उभौ प्रविशतः ।)

**विदूषकः**—[5]अवहाणेण दिट्ठिं देहि । एदं खु भवन्तं विअ वि-

---

१. नार्हति भवानन्तःपुरप्रतिष्ठितं दाक्षिण्यमेकपदे पृष्ठतः कर्तुम् ।

२. इत इतो भवान् ।

३. एतत्प्रमदवनं पवनदरचलाभिः पल्लवाङ्गुलिभिस्त्वरयतीव भवन्तं प्रवेष्टुम् ।

४. प्रविश निर्वृतिलाभाय ।

५. अवधानेन दृष्टिं देहि । एतत्खलु भवन्तमिव विलोभयितुकामया मधुलक्ष्म्या युवतिवेषलज्जयितृकं वसन्तकुसुमनेपथ्यं गृहीतम् ।

---

नार्हति भवानन्तःपुरप्रतिष्ठितं दाक्षिण्यमेकपदे पृष्ठतः कर्तुम् ॥ इत इतो भवान् ॥ एतत्प्रमदवनं पवनदरचलाभिः पल्लवाङ्गुलीभिस्त्वरयतीव भवन्तं प्रवेष्टुम् ॥ **आमत्तानामित्यादि** । स्पष्टोऽर्थः ॥ प्रविश निर्वृतिलाभाय ॥ अवधानेन दृष्टिं देहि । एतत्खलु भवन्तमिव विलोभयितुकामया मधुलक्ष्म्या युवतिवेषलज्जयितृकं वसन्तकु-

लोहइदुकामाए महुलच्छीए जुवइवेसलज्जापइत्तअं वसन्तकुसुमणेवत्थं गहीदं ।

**राजा**—(विस्मयात् ।) एतदवलोकयामि ।

रक्ताशोकरुचा विशेषितगुणो बिम्बाधरालक्तकः
प्रत्याख्यातविशेषकं कुरवकं श्यामावदातारुणम् ।
आक्रान्ता तिलकक्रिया च तिलकैर्लग्नद्विरेफाञ्जनैः
सावज्ञेव मुखप्रसाधनविधौ श्रीर्माधवी योषिताम् ॥ ५ ॥

(उभौ नाट्येनोद्यानशोभां निर्वर्णयतः ।)

(ततः प्रविशति पर्युत्सुका मालविका ।)

**मालविका**—अविण्णादहिअअं भट्टारं अहिलसन्ती अप्पणो

---

१. अविज्ञातहृदयं भर्तारमभिलषन्त्यात्मनोऽपि तावल्लज्जामि । कुतो विभवः स्निग्धस्य सखीजनस्येमं वृत्तान्तमाख्यातुम् । न जानेऽप्रतिकारगुरुकां वेदनां कियन्तं कालं मदनो मां नेष्यतीति । आ, कुत्र खलु प्रस्थितास्मि । आदिष्टास्मि देव्या । गौतमचापलाद्दोलापरिभ्रष्टायाः सरुजो मम चरणः । त्वं तावद्गत्वा तपनीयाशोकस्य दोहदं निर्वर्तयेति । यद्यसौ पञ्चरात्राभ्यन्तरे कुसुमं दर्शयति, ततोऽहमभिलाषपूरयितृकं प्रसादं दास्यामीति । यावन्नियोगभूमिं प्रथमं गता भवामि, तावदनुपदं मम चरणालंकारहस्तया बकुलावलिकयागन्तव्यम्, परिदेवयिष्यामि तावद्विस्रब्धं मुहूर्तकम् ।

---

सुमनेपथ्यं गृहीतम् ॥ **रक्ताशोकेत्यादि** । बिम्बाधरे । बिम्बमिवाधरस्तस्मिन् । 'विशेषणं विशेष्येण बहुलम्' इति विशेषणसमासः । 'उपमितं व्याघ्रादिभिःसामान्याप्रयोगे' इत्युपमितसमासस्तु कविभिरत्र ग्राम्ये(प्राये)ण नाङ्गीकृतः।अलक्तको लाक्षा । रक्ताशोकरुचा रक्ताशोककुसुमस्य रुचा कान्त्या विशेषितगुणः।विशेषितोऽतिशयितस्तिरस्कृतो गुणो रागो यस्य स तथोक्तः।श्यामावदातारुणम्।श्यामं च तदवदातमरुणं च तत्तथोक्तम्। 'वर्णो वर्णेन' इति कर्मधारयः।कुरबकं कुरबकपुष्पं प्रत्याख्यातविशेषकम् । प्रत्याख्यातं तिरस्कृतं विशेषकं पत्रभङ्गो येन तथोक्तम् । लग्नद्विरेफाञ्जनैर्लग्नः सक्तो द्विरेफो भ्रमर एवाञ्जनं येषु तैस्तिलकैस्तिलककुसुमैस्तिलकक्रियापि तिलकस्य ललाटिकायाः क्रियाक्रान्तोल्लङ्घिता । परिभूतेत्यर्थः।माधवी मधुसंबन्धिनी श्रीर्लक्ष्मीः । शोभेत्यर्थः । योषितां स्त्रीणां मुखप्रसाधनविधौ मुखालंकारकरणे सावज्ञेवावमानेन सहितेव । अवमाननां कृतवतीवेत्यर्थः ॥ अविज्ञातहृदयं भर्ता-

वि दाव लज्जेमि । कुदो विहवो सिणिद्धस्स सहीजणस्स इमं वुत्तन्तं आचक्खिदुं । ण जाणे अप्पडिआरगरुअं वेअणां केत्तिअं कालं मअणो मं णइस्सदित्ति । (इति कतिचित्पदानि गत्वा ।) आ, कहिं खु पत्थिदह्मि । (इति स्मृतिमभिनीय ।) आदिट्ठह्मि देवीए । गोदमचावलादो दोलापरिभट्टाए सरुजो मह चलणो । तुमं दाव गदुअ तवणीआसोअस्स दोहलं णिवट्टेहित्ति । जदि सो पञ्चरत्तब्भन्तरे कुसुमं दंसेदि, तदो अहं अहिलासपूरइत्तअं पसादं दाइस्सं ति । जाव णिओअभूमिं पुढमं गदा होमि, ताव अणुपदं मम चलणालंकारहत्थाए बउलावलिआए आअन्तव्वं, परिदेवइस्सं ताव वीसद्धं मुहुत्तअं । (इति परिक्रामति ।)

**विदूषकः**—(दृष्ट्वा ।) वअस्स, एदं खु सीहुपाणुव्वेजिदस्स मच्छण्डिआ उवणदा ।[1]

**राजा**—अयि, किमेतत् ।

**विदूषकः**—एसा णादिपरिआरवेसा ऊसुअवअणा एआइणी मालविआ अदूरे वट्टदि ।[2]

**राजा**—(सहर्षम् ।) कथं मालविका ।

**विदूषकः**—अह इं ।[3]

---

१. वयस्य, एतत्खलु सीधुपानोद्वेजितस्य मत्स्यण्डिकोपनता ।

२. एषा नातिपरिचारवेषोत्सुकवदनैकाकिनी मालविकाऽदूरे वर्तते ।

३. अथ किम् ।

---

रमभिलषन्त्यात्मनोऽपि तावल्लज्जामि । कुतो विभवः स्निग्धस्य सखीजनस्येमं वृत्तान्तमाख्यातुम् । न जानेऽप्रतीकारगुरुकां वेदनां कियन्तं कालं मदनो मां नेष्यतीति । आ, कुत्र खलु प्रस्थितास्मि । 'आ स्मृतौ' । आदिष्टास्मि देव्या । गौतमचापलाद्दोलापरिभ्रष्टायाः सरुजो मम चरणः । त्वं तावद्गत्वा तपनीयाशोकस्य दोहदं निर्वर्तयेति । यद्यसौ पञ्चरात्राभ्यन्तरे कुसुमं दर्शयति, ततोऽहमभिलाषपूरयितृकं प्रसादं दास्यामीति । यावन्नियोगभूमिं प्रथमं गता भवामि । 'यावत्पुरानिपातयोर्लट्' इति भविष्यदर्थे लट् । तावदनुपदं मम चरणालंकारहस्तया बकुलावलिकयागन्तव्यम् । परिदेवयिष्यामि तावद्विस्रब्धं मुहूर्तकम् ॥ वयस्य, एतत्खलु सीधुपानोद्वेजितस्य मत्स्यण्डिकोपनता ॥ मत्स्यण्डिका नाम शर्कराविशेषः ॥ एषा नातिपरिचारवेषोत्सुकवदनैकाकिनी मालविकाऽदूरे वर्तते ॥ अथ किम् ॥

**राजा**—शक्यमिदानीं जीवितमवलम्बितुम् ।

त्वदुपलभ्य समीपगतां प्रियां
हृदयमुच्छ्वसितं मम विक्लवम् ।
तरुवृतां पथिकस्य जलार्थिनः
सरितमारसितादिव सारसात् ॥ ६ ॥

अथ क्व तत्रभवती ।

**विदूषकः**—[1]एसा तरुराइमज्झादो णिक्कन्ता इदो एव्व अहिवट्टन्ती दीसइ ।

**राजा**—(विलोक्य सहर्षम् ।) वयस्य, पश्यामि ।

विपुलं नितम्बबिम्बे मध्ये क्षामं समुन्नतं कुचयोः ।
अत्यायतं नयनयोर्मम जीवितमेतदायाति ॥ ७ ॥

सखे, पूर्वस्मादतिमनोहरमवस्थान्तरमुपारूढा तत्रभवती । तथा हि ।

शरकाण्डपाण्डुगण्डस्थलेयमाभाति परिमिताभरणा ।
माधवपरिणतपत्रा कतिपयकुसुमेव कुन्दलता ॥ ८ ॥

**विदूषकः**—[2]एसावि भवं विअ मअणवाहिणा परिमुट्ठा भविस्सदि ।

**राजा**—सौहार्दमेवं पश्यति ।

**मालविका**—[3]अअं सो सुउमालदोहलापेक्खी अगहिदकुसुमणे-

---

१. एषा तरुराजिमध्यान्निष्क्रान्तेत एवाभिवर्तमाना दृश्यते ।

२. एषापि भवानिव मदनव्याधिना परिमृष्टा भविष्यति ।

३. अयं स सुकुमारदोहदापेक्षी अगृहीतकुसुमनेपथ्य उत्कण्ठिताया ममाशोकोऽनुकरोति । यावदस्य प्रच्छायशीतले शीतले शिलापट्टके निषण्णात्मानं विनोदयामि ।

---

**त्वदुपलभ्येत्यादि** । स्पष्टोऽर्थः । अत्र संचिन्त्यमानार्थस्य प्राप्तेः क्रमो नाम संध्यङ्गमुक्तं भवति ॥ एषा तरुराजिमध्यान्निष्क्रान्तेत एवाभिवर्तमाना दृश्यते ॥ **विपुलमिति** । स्पष्टोऽर्थः ॥ **शरकाण्डेति** । स्पष्टोऽर्थः ॥ एषापि भवानि-

वच्छो उक्कण्ठिदाए मह असोओ अणुकरेदि । जाव एदस्स पच्छा-
यसीदले सिलापट्टए णिसण्णा अप्पाणं विणोदेमि ।

**विदूषकः**—[1]सुदं भवदा । उक्कण्ठिदम्हित्ति तत्तहोदी मन्तेदि ।

**राजा**—नैतावता भवन्तं प्रसन्नतर्कं मन्ये । कुतः ।

वोढा कुरबकरजसां किसलयपुटभेदशीकरानुगतः ।
अनिमित्तोत्कण्ठामपि जनयति मनसो मलयवातः ॥ ९ ॥

(मालविकोपविष्टा ।)

**राजा**—सखे; इतस्तावत् । आवां लतान्तरितौ भवावः ।

**विदूषकः**—[2]ईरावदिं विअ अदूरे समद्धेमि ।

**राजा**—नहि कमलिनीं लब्ध्वा ग्राहमपेक्षते मतङ्गजः । (इति विलोकयन्स्थितः ।)

**मालविका**—[3]हिअअ, णिरवलम्बणादो अदिभूमिलङ्घिणो ते मणोरहादो विरम । किं मं आआसिअ ।

(विदूषको राजानमपेक्षते ।)

**राजा**—प्रिये, पश्य वामत्वं स्नेहस्य ।

औत्सुक्यहेतुं विवृणोषि तत्त्वं
तत्त्वाववोधैकरसो न तर्कः ।
तथापि रम्भोरु करोमि लक्ष्य-
मात्मानमेषां परिदेवितानाम् ॥ १० ॥

---

१. श्रुतं भवता । उत्कण्ठितास्मीति तत्रभवती मन्त्रयति ।

२. इरावतीमिवादूरे समर्थये ।

३. हृदय, निरवलम्बनादतिभूमिलङ्घिनस्ते मनोरथाद्विरम । किं मामायास ।

---

व मदनव्याधिना परिमृष्टा भविष्यति ॥ अयं स सुकुमारदोहदापेक्ष्यगृहीतकुसुमनेपथ्य उत्कण्ठिताया ममाशोकोऽनुकरोति । यावदस्य प्रच्छायशीतले शिलापट्टके निषण्णात्मानं विनोदयामि ॥ श्रुतं भवता । उत्कण्ठितास्मीति तत्रभवती मन्त्रयति ॥ **वोढेत्यादि** । स्पष्टोऽर्थः इरावतीमिवादूरे समर्थये ॥ हृदय, निरवलम्बनादतिभूमिलङ्घिनस्ते मनोरथाद्विरम । किं मामायास्य ॥ **औत्सुक्येत्यादि** । स्पष्टोऽर्थः ॥ सांप्रतं भवतो निःसंशयं भविष्यति एषार्पित

**विदूषकः**—संपदं भवदो णिस्संसअं भविस्सदि । एसा अप्पिदमअणसंदेसा विवित्ते णं बउलावलिआ उवट्ठिदा ।

**राजा**—अपि स्मरेदसावस्मदभ्यर्थनाम् ।

**विदूषकः**—किं[2] दाणिं एसा दासीए दुहिदा तुह गरुअं संदेसं विसुमरेदि । अहं दाव ण विसुमरेमि ।

(प्रविश्य चरणालंकारहस्ता ।)

**बकुलावलिका**—अवि[3] सुहं सहीए ।

**मालविका**—अह्मो[4] बउलावलिआ । सहि, साअदं ते । उवविस;

**बकुलावलिका**—(उपविश्य ।) हंला[5], तुमं दाणिं जोग्गदाए णिउत्ता । ता एक्कं चलणं उवणेहि । जाव सालत्तअं सनूउरं च करेमि ।

**मालविका**—(आत्मगतम् ।) हिअअ[6], सुहिदाए अलं उवट्ठिदो अअं विहवोत्ति । कहं दाणीं अत्ताणं मोचेअं । अहवा दाणिं एदं एव्व मिच्छुमण्डणं मे हविस्सदि ।

---

१. सांप्रतं भवतो निःसंशयं भविष्यति । एषार्पितमदनसंदेशा विविक्ते एनां बकुलावलिकोपस्थिता ।

२. किमिदानीमेषा दास्या दुहिता तव गुरुकं संदेशं विस्मरति । अहं तावन्न विस्मरामि ।

३. अपि सुखं सख्याः ।

४. अहो बकुलावलिका । सखि, स्वागतं ते । उपविश ।

५. सखि, त्वमिदानीं योग्यतया नियुक्ता । तस्मादेकं चरणमुपनय । यावत्सालक्तकं सनूपुरं च करोमि ।

६. हृदय, सुखितयालमुपस्थितोऽयं विभव इति । कथमिदानीमात्मानं मोचयेयम् । अथवेदानीमेतदेव मृत्युमण्डनं मे भविष्यति ।

---

मदनसंदेशा विविक्ते एनां बकुलावलिकोपस्थिता ॥ किमिदानीमेषा दास्या दुहिता तव गुरुकं संदेशं विस्मरति । अहं तावन्न विस्मरामि ॥ अपि सुखं सख्याः ॥ अहो बकुलावलिका । सखि, स्वागतं ते । उपविश ॥ सखि, त्वमिदानीं योग्यतया नियुक्ता । तस्मादेकं चरणमुपनय । यावत्सालक्तकं सनूपुरं च करोमि ॥ हृदय, सुखितयालमुपस्थितोऽयं विभव इति । कथमिदानीमात्मानं मोचयेयम् ।

बकुलावलिका—किं[1] विआरेसि । ऊसुआ खु इमस्स तवणीआसोअस्स मुउलुग्गमे देवी ।

राजा—कथमशोकदोहदनिमित्तोऽयमारम्भः ।

विदूषकः—किंणु[2] खु जाणासि तुमं । मह कालणादो देवी इमं अन्तेउरणेवच्छेण जोअइस्सदित्ति ।

मालविका—हला[3], मरिसेहि दाव णं (इति पादमुपहरति ।)

बकुलावलिका—अइ[4], सरीरअं सि मे । (इति नाट्येन चरणसंस्कारमारभते ।)

राजा—

चरणान्तनिवेशितां प्रियायाः
सरसां पश्य वयस्य रागरेखाम् ।
प्रथमामिव पल्लवप्रसूतिं
हरदग्धस्य मनोभवद्रुमस्य ॥ ११ ॥

विदूषकः—चलणाणुरूवो[5] तत्तहोदीए अहिआरो उवक्खित्तो ।

राजा—सम्यगाह भवान् ।

---

१. किं विचारयसि । उत्सुका खल्वस्य तपनीयाशोकस्य मुकुलोद्गमे देवी ।

२. किंनु खलु जानासि त्वम् । मम कारणाद्देवीमामन्तःपुरनेपथ्येन योजयिष्यतीति ।

३. सखि, मर्षय तावदेनम् ।

४. अयि, शरीरमसि मे ।

५. चरणानुरूपस्तत्रभवत्या अधिकार उपक्षिप्तः ।

---

अथवेदानीमेतदेव मृत्युमण्डनं मे भविष्यति॥ किं विचारयसि । उत्सुका खल्वस्य तपनीयाशोकस्य मुकुलोद्गमे देवी ॥ किंनु खलु जानासि त्वम् । मम कारणाद्देवीमामन्तःपुरनेपथ्येन योजयिष्यतीति ॥ सखि, मर्षय तावदेनम् ॥ अयि, शरीरमसि मे ॥ **चरणान्तेत्यादि** । स्पष्टोऽर्थः ॥ चरणानुरूपस्तत्रभवत्या

नवकिसलयरागेणाग्रपादेन बाला
स्फुरितनखरुचा द्वौ हन्तुमर्हत्यनेन ।
अकुसुमितमशोकं दोहदापेक्षया वा
प्रणमितशिरसं वा कान्तमार्द्रापराधम् ॥ १२ ॥

**विदूषकः**—[1]पहरिस्सदि तत्तहोदी तुमं अवरद्धम् ।

**राजा**—मूर्ध्ना प्रतिगृहीतं वचः सिद्धिदर्शिनो ब्राह्मणस्य ।

(ततः प्रविशति युक्तमदा इरावती चेटी च ।)

**इरावती**—[2]हञ्जे णिउणिए, सुणोमि बहुसो मदो किल इत्थिआजणस्स मण्डणं ति । अवि सच्चो लोअवाओ अअं ।

**निपुणिका**—[3]पढमं लोअवाओ एव्व । अज्ज सच्चो संवुत्तो ।

**इरावती**—[4]संकित्तणसंसिणा अलं सिणेहेण । कहेहि कुदो दाणिं ओगमिदव्वो दोलाघरं पुढमं गदो भट्टा ण वेत्ति ।

**निपुणिका**—[5]भट्टिणीए अखण्डिदादो पणआदो ।

**इरावती**—[6]अलं सेवाए । मज्झत्थदं परिगहिअ भणाहि ।

---

१. प्रहरिष्यति तत्रभवती त्वामपराद्धम् ।

२. चेटि निपुणिके, शृणोमि बहुशो मदः किल स्त्रीजनस्य मण्डनमिति अपि सत्यो लोकवादोऽयम् ।

३. प्रथमं लोकवाद एव । अद्य सत्यः संवृत्तः ।

४. संकीर्तनशंसिनालं स्नेहेन । कथय कुत इदानीमवगन्तव्यो दोलागृहं प्रथमं गतो भर्ता न वेति ।

५. भट्टिन्या अखण्डितात्प्रणयात् ।

६. अलं सेवया । मध्यस्थतां परिगृह्य भण ।

---

अधिकार उपक्षिप्तः ॥**नवकिसलयेत्यादि**। स्पष्टोऽर्थः ॥ प्रहरिष्यति तत्रभवती त्वामपराद्धम् ॥ चेटि निपुणिके, शृणोमि बहुशो मदः किल स्त्रीजनस्य मण्डनमिति । अपि सत्यो लोकवादोऽयम् ॥ प्रथमं लोकवाद एव अद्य सत्यः संवृत्तः ॥ संकीर्तनशंसिनालं स्नेहेन कथय कुत इदानीमवगन्तव्यो दोलागृहं प्रथमं गतो भर्ता न वेति ॥ भट्टिन्या अखण्डितात्प्रणयात् । अलं सेवया । मध्यस्थतां परिगृह्य भण ॥ वसन्तोद्यानलोलुपेनार्यगौतमेन । कथितम् । त्वरतां भट्टिनी । चेटिम,

**निपुणिका**—[1]वसन्तोआअणलोलुवेण अज्जगोदमेण कहिअं । तुवरदु भट्टिणी ।

**इरावती**—(अवस्थासदृशं परिक्रम्य ।) [2]हंज्जे, मदेण किलामिअमाणं अत्ताणं अज्जउत्तदंसणे हिअअं तुवरेदि । चलणा उण ण मह पसरन्ति ।

**निपुणिका**—[3]णं पत्तह्म दोलाघरं ।

**इरावती**—[4]णिउणिए, अज्जउत्तोएत्थ ण दीसदि ।

**निपुणिका**—[5]भट्टिणीए ओलोअदु । परिहासणिमित्तं कहिं वि अदिट्ठेण भत्तुणा होदव्वं । इमं पिअङ्गुलदापरिक्खित्तं असोअ-सिलापट्टं पविसामो ।

**इरावती**—[6]तह ।

**निपुणिका**—(विलोक्य ।) [7]ओलोअदु भट्टिणी । चूदङ्कुरं विचि-ण्णन्तीणं पिवीलिआहिं दंसिदं ।

---

१. वसन्तोपायनलोलुपेनार्यगौतमेन कथितम् । त्वरतां भट्टिनी ।

२. चेटि, मदेन क्लाम्यमानमात्मानमार्यपुत्रदर्शने हृदयं त्वरयति । चरणौ पुनर्न मम प्रसरतः ।

३. ननु प्राप्ते स्वो दोलागृहम् ।

४. निपुणिके, आर्यपुत्रोऽत्र न दृश्यते ।

५. भट्टिन्यवलोकयतु । परिहासनिमित्तं कुत्राप्यदृष्टेन भर्त्रा भवितव्यम् । इमं प्रियङ्गुलतापरिक्षिप्तमशोकशिलापट्टं प्रविशावः ।

६. तथा ।

७. अवलोकयतु भट्टिनी । चूताङ्कुरं विचिन्वत्योः पिपीलिकाभिर्दष्टम् ।

---

देन क्लाम्यमानमात्मानमार्यपुत्रदर्शने हृदयं त्वरयति । चरणौ पुनर्न मम प्रसरतः ॥ ननु प्राप्ते स्वो दोलागृहम् ॥ निपुणिके, आर्यपुत्रोऽत्र न दृश्यते ॥ भट्टिन्यवलोकयतु । परिहासनिमित्तं कुत्राप्यदृष्टेन भर्त्रा भवितव्यम् । इमं प्रियङ्गुलता-परिक्षिप्तमशोकशिलापट्टं प्रविशावः ॥ तथा ॥ अवलोकयतु भट्टिनी । चूताङ्कुरं विचि-

इरावती—[1]कहं विअ।

निपुणिका—[2]एसा असोअपाअवच्छाआए मालविआए बउलावलिआ चलणालंकारं णिव्वट्टेदि।

इरावती—(शङ्कां रूपयित्वा।) [3]अभूमी इअं मालविआए। कहं एत्थ तक्केसि।

निपुणिका—[4]तक्केमि दोलापरिब्भंसिदाए सरुअचलणाए देवीए असोअदोहलाहिआरे मालविआ णिउत्तेत्ति। अण्णहा कहं देवी सअं धारिअं णूउरजुउलं परिअणस्स अब्भणुजाणिस्सदि।

इरावती—[5]महदी क्खु से संभावणा।

निपुणिका—[6]किं अण्णेसीअदि भट्टा।

इरावती—[7]हला, ण मे चलणा अण्णदो पवट्टन्ति। मदो मं

१. कथमिव।

२. एषाशोकपादपच्छायायां मालविकाया बकुलावलिका चरणालंकारं निर्वर्तयति।

३. अभूमिरियं मालविकायाः। कथमत्र तर्कयसि।

४. तर्कयामि दोलापरिभ्रष्टया सरुजचरणया देव्याशोकदोहदाधिकारे मालविका नियुक्तेति। अन्यथा कथं देवी स्वयंधारितं नूपुरयुगुलं परिजनस्याभ्यनुज्ञास्यति।

५. महती खल्वस्याः संभावना।

६. किमन्विष्यते भर्ता।

७. सखि, न मे चरणावन्यतः प्रवर्तेते। मदो मां विकारयति। आशङ्कितस्य तावदन्तं गमिष्यामि। स्थाने खलु कातरं मे हृदयम्।

न्वल्योः पिपीलिकाभिर्दष्टम्। भावे क्तः॥ कथमिव॥ एषाशोकपादपच्छायायां मालविकाया बकुलावलिका चरणालंकारं निर्वर्तयति॥ अभूमिरियं मालविकायाः। कथमत्र तर्कयसि॥ तर्कयामि दोलापरिभ्रष्टया सरुजचरणया देव्याशोकदोहदाधिकारे मालविका नियुक्तेति। अन्यथा कथं देवी स्वयंधारितं नूपुरयुगुलं परिजनस्याभ्यनुज्ञास्यति॥ महती खल्वस्याः संभावना॥ किमन्विष्यते भर्ता॥ सखि, न मे चरणावन्यतः प्रवर्तेते। मदो मां विकारयति। आशङ्कितस्य तावदन्तं ग-

विआरेदि । आसङ्किदस्स दाव अन्तं गमिस्सं । (इति मालविकां नि- र्वर्ण्य । आत्मगतम् ।) ठाणे क्खु कादरं मे हिअअं ।

**बकुलावलिका**—(मालविकायै चरणं दर्शयन्ती ।) [1]अवि रोअदि ते राअरेहाविण्णासो ।

**मालविका**—[2]हला, अत्तणो चलणं ति लज्जेमि णं पसंसिदुं । तेण पसाहणकलाए अहिविणीदासि ।

**बकुलावलिका**—[3]एत्थ अहं भत्तुणो सीसह्मि ।

**विदूषकः**—[4]तुवरेहि दाव णं गुरुदक्खिणाए ।

**मालविका**—[5]दिट्ठिआ ण गव्विदासि ।

**बकुलावलिका**—[6]उवदेसाणुरूवा चलणा लम्भिअ अज्ज दाव गव्विदा भविस्सं । (रागं विलोक्य । आत्मगतम् ।) हन्त, सिद्धं मे दुत्थम् । (प्रकाशम् ।) सहि, एक्कस्स दे चलणस्स अवसिदो राअणिक्खेवो । केवलं मुहमारुदो लम्भइदव्वो । अहवा पवादं एदं ठाणं ।

---

१. अपि रोचते ते रागरेखाविन्यासः ।

२. सखि, आत्मनश्चरण इति लज्जे एनं प्रशंसितुम् । तेन प्रसाधनकलायामभिविनीतासि ।

३. अत्राहं भर्तुः शिष्यास्मि ।

४. त्वरय तावदेनां गुरुदक्षिणायै ।

५. दिष्ट्या न गर्वितासि ।

६. उपदेशानुरूपौ चरणौ लब्ध्वाद्य तावद्गर्विता भविष्यामि । हन्त, सिद्धं मे दूत्यम् । सखि, एकस्य ते चरणस्यावसितो रागनिक्षेपः । केवलं मुखमारुतो लम्भयितव्यः । अथवा प्रवातमेतत्स्थानम् ।

---

मिष्यामि । स्थाने खलु कातरं मे हृदयम् ॥ अपि रोचते ते रागरेखाविन्यासः ॥ सखि, आत्मनश्चरण इति लज्जे एनं प्रशंसितुम् । तेन प्रसाधनकलायामभिविनी- तासि ॥ अत्राहं भर्तुः शिष्यास्मि । त्वरय तावदेनां गुरुदक्षिणायै ॥ दिष्ट्या न गर्वितासि ॥ उपदेशानुरूपौ चरणौ लब्ध्वाद्य तावद्गर्विता भविष्यामि । हन्त, सिद्धं मे दूत्यम् । सखि, एकस्य ते चरणस्यावसितो रागनिक्षेपः । केवलं मुखमा-

**राजा**—सखे, पश्य ।

आर्द्रालक्तकमस्याश्चरणं मुखमारुतेन वीजयितुम् ।
प्रतिपन्नः प्रथमतरः संप्रति सेवावकाशो मे ॥ १३ ॥

**विदूषकः**—[1]कुदो दे अणुसओ । चिरं भवदा एदं कमेण अणुहविदव्वं ।

**बकुलावलिका**—[2]सहि, अरुणसदपत्तं विअ सोहदि दे चलणं । सव्वहा भत्तुणो अङ्कपरिवट्टिणी होहि ।

(इरावती निपुणिकामपेक्षते ।)

**राजा**—ममेयमाशीः ।

**मालविका**—[3]मा अवअणीअं मन्तेहि ।

**बकुलावलिका**—[4]मए मन्तइदव्वं एव्व मन्तिदं ।

**मालविका**—[5]पिआ खु अहं तव ।

**बकुलावलिका**—[6]ण केवलं मह ।

**मालविका**—[7]कस्स खु अण्णस्स ।

---

१. कुतस्तेऽनुशयः । चिरं भवता एतत्क्रमेणानुभवितव्यम् ।

२. सखि, अरुणशतपत्रमिव शोभते ते चरणम् । सर्वथा भर्तुरङ्कपरिवर्तिनी भव ।

३. मा अवचनीयं मन्त्रयस्व ।

४. मया मन्त्रयितव्यमेव मन्त्रितम् ।

५. प्रिया खल्वहं तव ।

६. न केवलं मम ।

७. कस्य खल्वन्यस्य ।

---

रुतो लम्भयितव्यः । अथवा प्रवातमेतत्स्थानम् ॥ **आर्द्रालक्तकमित्यादि** । मुखमारुतेन वीजयितुं शोषयितुं प्रथमतरो मुख्यतरः प्रतिपन्नः प्राप्तः ॥ कुतस्तेऽनुशयः । चिरं भवता एतत्क्रमेणानुभवितव्यम् ॥ सखि, अरुणशतपत्रमिव शोभते ते चरणम् । सर्वथा भर्तुरङ्कपरिवर्तिनी भव ॥ मा अवचनीयं मन्त्रयस्व ॥ मया मन्त्रयितव्यमेव मन्त्रितम् ॥ प्रिया खल्वहं तव ॥ न केवलं मम ॥ कस्य खल्व-

**बकुलावलिका**—[1]गुणेसु अहिणिवेसिणो भत्तुणो वि ।

**मालविका**—[2]अलीअं मन्तेसि । एदं एव्व मइ णत्ति ।

**बकुलावलिका**—[3]सच्चं तुइ णत्ति । भत्तुणो किसेसु वरपण्डुरेसु दीसइ अङ्गेसु

**निपुणिका**—[4]पुढमं गुणिदं विअ हदासाए उत्तरं ।

**बकुलावलिका**—[5]अणुराओ अणुराएण पच्चेट्ठव्वो त्ति सुअणवअणं पमाणीकरेहि ।

**मालविका**—[6]किं अत्तणो छन्देण मन्तेसि ।

**बकुलावलिका**—[7]णहि णहि । भत्तुणो खु एदाइं पणअमिदुआइं अक्खराइं वत्तन्तरिदाइं ।

**मालविका**—[8]हला, देविं चिन्तिअ ण मे हिअअं विस्ससदि ।

**बकुलावलिका**—[9]मुद्धे, भमरसंपादो भविस्सदित्ति वसन्तावदारसव्वस्सं किं ण चूदप्पसवो ओदंसिदव्वो ।

---

१. गुणेष्वभिनिवेशिनो भर्तुरपि ।
२. अलीकं मन्त्रयसे । एतदेव मयि नास्ति ।
३. सत्यं त्वयि नास्ति । भर्तुः कृशेषु वरपाण्डरेषु दृश्यतेऽङ्गेषु ।
४. प्रथमं गुणितमिव हताशाया उत्तरम् ।
५. अनुरागोऽनुरागेण प्रत्येष्टव्य इति सुजनवचनं प्रमाणीकुरु ।
६. किमात्मनश्छन्देन मन्त्रयसे ।
७. नहि नहि । भर्तुः खल्वेतानि प्रणयमृदुकान्यक्षराणि वक्रान्तरितानि ।
८. सखि, देवीं चिन्तयित्वा न मे हृदयं विश्वसिति ।
९. मुग्धे, भ्रमरसंपातो भविष्यतीति वसन्तावतारसर्वस्वं किं न चूतप्रसवोऽवतंसितव्यः ।

---

न्यस्य ॥ गुणेष्वभिनिवेशिनो भर्तुरपि ॥ अलीकं मन्त्रयसे । एतदेव मयि नास्ति ॥ सत्यं त्वयि नास्ति । भर्तुः कृशेषु वरपाण्डुरेषु दृश्यतेऽङ्गेषु ॥ प्रथमं गुणितमिव हताशाया उत्तरम् ॥ अनुरागोऽनुरागेण प्रत्येष्टव्य इति सुजनवचनं प्रमाणीकुरु ॥ किमात्मनश्छन्देन मन्त्रयसे ॥ नहि नहि । भर्तुः खल्वेतानि प्रणयमृदुकान्यक्षराणि वक्रान्तरितानि ॥ सखि, देवी चिन्तयित्वा न मे हृदयं विश्वसिति ॥ मुग्धे, भ्रमरसंपातो भविष्यतीति वसन्तावतारसर्वस्वं किं न चूतप्रसवोऽवतंसितव्यः ॥

**मालविका**—तुमं दाव दुज्जादे अच्चंतं सहाया होहि ।[1]

**बकुलावलिका**—विमद्दसुरही बउलावलिआ खु अहं ।[2]

**राजा**—साधु बकुलावलिके, साधु ।

भावज्ञानानन्तरं प्रस्तुतेन
प्रत्याख्याने दत्तयुक्तोत्तरेण ।
वाक्येनेयं स्थापिता स्वे निदेशे
स्थाने प्राणाः कामिनां दूत्यधीनाः ॥ १४ ॥

**इरावती**—पेक्ख[3] । कारिदं एव्व बउलावलिआए एदं पदं मालविआए ।

**निपुणिका**—भट्टिणि,[4] अहिआरस्स उइदो उवदेसो ।

**इरावती**—ठाणे[5] खु संकिदं मे हिअअं । गहीदत्था अणन्तरं चिन्तइस्सं ।

**बकुलावलिका**—एसो[6] दुदी ओवि दे णिव्वुत्तपरिकम्मा चलणो । जाव णं सणूउरं करेमि । (इति नाट्येन नूपुरयुगलमामुच्य ।) हला, उट्ठेहि । असोअविआसइत्तअं देवीए णिओअं अणुचिट्ठ ।

(उभे उत्तिष्ठतः ।)

---

१. त्वं तावद्दुर्जातेऽत्यन्तं सहाया भव ।

२. विमर्दसुरभिर्बकुलावलिका खल्वहम् ।

३. पश्य । कारितमेव बकुलावलिकयैतत्पदं मालविकायाः ।

४. भट्टिनि, अधिकारस्योचित उपदेशः ।

५. स्थाने खलु शङ्कितं मे हृदयम् । गृहीतार्थानन्तरं चिन्तयिष्यामि ।

६. एष द्वितीयोऽपि ते निर्वृत्तपरिकर्मा चरणः । यावदेनं सनूपुरं करोमि । हला, उत्तिष्ठ । अशोकविकासयितृकं देव्या नियोगमनुतिष्ठ ।

---

त्वं तावद्दुर्जाते दुःखेऽत्यन्तं सहाया भव । 'दुर्जातं व्यसने क्लीबमसम्यग्जातवस्तुनि' इति केशवस्वामी ॥ विमर्दसुरभिर्बकुलावलिका खल्वहम् ॥ **भावज्ञानेत्यादि** । स्पष्टोऽर्थः ॥ पश्य । कारितमेव बकुलावलिकयैतत्पदं मालविकायाः ॥ भट्टिनि, अधिकारस्योचित उपदेशः । स्थाने खलु शङ्कितं मे हृदयम् । गृहीतार्थानन्तरं चिन्तयिष्यामि । एष द्वितीयोऽपि ते निर्वृत्तपरिकर्मा चरणः । यावदेनं सनूपुरं करोमि । हला, उत्तिष्ठ । अशोकविकासयितृकं देव्या नियोग-

**इरावती**—[1]सुदो देवीए णिओओ । होदु दाणिं ।

**बकुलावलिका**—[2]ऐसो उवारूढराओ उअभोअक्खमो पुरदो दे वट्टइ ।

**मालविका**—(सहर्षम् ।) [3]किं भट्टा ।

**बकुलावलिका**—(सस्मितम् ।) [4]ण दाव भट्टा । एसो असोअसाहावलम्बि पल्लवगुच्छओ । ओदंसेहि णं ।

**विदूषकः**—[5]सुदं भवदा ।

**राजा**—सखे, पर्याप्तमेतावता कामिनाम् ।

अनातुरोत्कण्ठितयोः प्रसिध्यता
समागमेनापि रतिर्न मां प्रति ।
परस्परप्राप्तिनिराशयोर्वरं
शरीरनाशोऽपि समानुरागयोः ॥ १५ ॥

(मालविका रचितपल्लवावतंसा पादमशोकाय प्रहिणोति ।)

**राजा**—वयस्य,

आदाय कर्णकिसलयमस्मादियमत्र चरणमर्पयति ।
उभयोः सदृशविनिमयादात्मानं वञ्चितं मन्ये ॥ १६ ॥

---

१. श्रुतो देव्या नियोगः । भवत्विदानीम् ।

२. एष उपारूढराग उपभोगक्षमः पुरतस्ते वर्तते ।

३. किं भर्ता ।

४. न तावद्भर्ता । एषोऽशोकशाखावलम्बी पल्लवगुच्छः । अवतंसयैनम् ।

५. श्रुतं भवता ।

---

मनुतिष्ठ ॥ श्रुतो देव्या नियोगः । भवत्विदानीम् ॥ एष उपारूढराग उपभोगक्षमः पुरतस्ते वर्तते ॥ किं भर्ता ॥ न तावद्भर्ता । एषोऽशोकशाखावलम्बी पल्लवगुच्छः । अवतंसयैनम् ॥ श्रुतं भवता ॥ **अनातुरेत्यादि** । अनातुरोत्कण्ठितयोः । अनातुरोऽनार्तः । उत्कण्ठितः कामोत्कण्ठित इत्यर्थः । प्रसिध्यता संभवता समागमेनापि संपर्केणापि मां प्रति मामनु । मत्पक्ष इत्यर्थः । रतिर्न शृङ्गारो=भवति । एकानुरागस्य रसाभासत्वात् । तथा चोक्तम्—'एकत्रैवानुरागश्चेद्बहुसक्तिश्च योषितः । अनौचित्यप्रवृत्तिश्च शृङ्गाराभास उच्यते ॥' इति । शेषं स्पष्टम् ॥ **आदायेत्यादि** । कर्णकिसलयं कर्णपूरार्थं किसलयम् । अत्र कर्णशब्देन कर्णपूरो लक्ष्यते ॥ सखि,

**बकुलावलिका**—हला, णत्थि दे दोसो । णिग्गुणो अअं असोओ जइ कुसुमोब्भेदमन्थरो हवे, जो दे चलणसक्कारं लम्भिअ ।

**राजा**—

अनेन तनुमध्यया मुखरनूपुराराविणा
नवाम्बुरुहकोमलेन चरणेन संभावितः ।
अशोक यदि सद्य एव मुकुलैर्न संपत्स्यसे
वृथा वहसि दोहदं ललितकामिसाधारणम् ॥ १७ ॥

सखे, वचनानुसरणपूर्वकं प्रवेष्टुमिच्छामि ।

**विदूषकः**—एहि । णं परिहासइस्सं ।

(उभौ प्रवेशं कुरुतः ।)

**निपुणिका**—भट्टिणि भट्टिणि, भट्टा एत्थ पविसदि ।

**इरावती**—एवं पुढमं मम चिन्तिदं हिअएण ।

**विदूषकः**—(उपेत्य ।) जुत्तं णाम अत्तहोदो पिअवअस्सो अअं असोओ णं वामपादेण ताडिदुं ।

**उभे**—(ससंभ्रमम् ।) अम्हो, भट्टा ।

---

१. सखि, नास्ति ते दोषः । निर्गुणोऽयमशोको यदि कुसुमोद्भेदमन्थरो भवेत्, यस्ते चरणसत्कारं लब्ध्वा ।

२. एहि । एनां परिहासयिष्यामि ।

३. भट्टिनि, भट्टिनि, भर्तात्र प्रविशति ।

४. एवं प्रथमं मम चिन्तितं हृदयेन ।

५. युक्तं नाम अत्रभवतः प्रियवयस्योऽयमशोकः एनं वामपादेन ताडयितुम् ।

६. अहो, भर्ता ।

---

नास्ति ते दोषः । निर्गुणोऽयमशोको यदि कुसुमोद्भेदमन्थरो भवेत्, यस्ते चरणसत्कारं लब्ध्वा ॥ **अनेनेत्यादि** । स्पष्टोऽर्थः ॥ एहि । एनां परिहासयिष्यामि ॥ भट्टिनि भट्टिनि, भर्तात्र प्रविशति ॥ एवं प्रथमं मम चिन्तितं हृदयेन ॥ युक्तं नाम अत्रभवतः प्रियवयस्योऽयमशोकः एनं वामपादेन ताडयितुम् । 'जुत्तं णाम' इत्यत्र काकुरनुसं-

**विदूषकः**—¹वउलावलिए, गहीदत्थाए तुए अत्तहोदी ईरिसं अविणअं करन्ती कीस ण णिवारिदा ।

(मालविका भयं रूपयति ।)

**निपुणिका**—²भट्टिणि, पेक्ख । किं पउत्तं अज्जगोदमेण ।

**इरावती**—³कहं खु बह्मबन्धु अण्णहा होदि ।

**बकुलावलिका**—⁴अज्ज एसा देवीए णिओअं अणुचिट्ठदि । एदस्सिं अदिक्कमे परवदी इअं । पसीददु भट्टा । (इत्यात्मना सहैनां प्रणिपातयति ।)

**राजा**—यद्येवमनपराधासि । उत्तिष्ठ भद्रे । (इति हस्तेन गृहीत्वैनामुत्थापयति ।)

**विदूषकः**—⁵जुज्जइ । देवी एत्थ माणइदव्वा ।

**राजा**—

किसलयमृदोर्विलासिनि कठिने निहितस्य पादपस्कन्धे ।
चरणस्य न ते बाधा संप्रति वामोरु वामस्य ॥ १८ ॥

(मालविका लज्जां रूपयति ।)

---

१. बकुलावलिके, गृहीतार्थया त्वयात्रभवतीदृशमविनयं कुर्वती कस्मान्न निवारिता ।

२. भट्टिनि, पश्य । किं प्रवृत्तमार्यगौतमेन ।

३. कथं खलु ब्रह्मबन्धुरन्यथा भवति ।

४. आर्य, एषा देव्या नियोगमनुतिष्ठति । एतस्मिन्नतिक्रमे परवतीयम् । प्रसीदतु भर्ता ।

५. युज्यते । देव्यत्र मानयितव्या ।

---

धेया ॥ अहो, भर्ता ॥ वकुलावलिके, गृहीतार्थया त्वयात्रभवतीदृशमविनयं कुर्वती कस्मान्न निवारिता ॥ **भयं रूपयतीति** । अत्र भयकथनात्संभ्रमणं नाम संध्यङ्गमुक्तं भवति ॥ भट्टिनि, पश्य । किं प्रवृत्तमार्यगौतमेन ॥ कथं खलु ब्रह्मबन्धुरन्यथा भवति ॥ आर्य, एषा देव्या नियोगमनुतिष्ठति । एतस्मिन्नतिक्रमे परवतीयम् । प्रसीदतु भर्ता ॥ युज्यते । देव्यत्र मानयितव्या ॥ **किसलयेत्यादि** ।

**इरावती**—[1]अहो णवणीदक्कप्पहिअओ अज्जउत्तो ।

**मालविका**—[2]वउलावलिए, एहि । अणुचिट्ठिदं अत्तणो णिओअं देवीए णिवेदेह्म ।

**बकुलावलिका**—[3]विण्णावेहि भट्टारं विसज्जेहित्ति ।

**राजा**—भद्रे, यास्यसि । मम तावदुत्पन्नावसरमर्थित्वं श्रूयताम् ।

**बकुलावलिका**—[4]अवहिदा सुणाहि । आणवेदु भट्टा ।

**राजा**—

धृतिपुष्पमयमपि जनो बध्नाति न तादृशं चिरात्प्रभृति ।
स्पर्शामृतेन पूरय दोहदमस्याप्यनन्यरुचेः ॥ १९ ॥

**इरावती**—(सहसोपसृत्य ।) [5]पूरेहि पूरेहि । असोओ कुसुमं ण दंसेदि । अअं उण पुप्फदि एव्व ।

(सर्वे इरावतीं दृष्ट्वा संभ्रान्ताः ।)

**राजा**—(अपवार्य ।) वयस्य, का प्रतिपत्तिरत्र ।

**विदूषकः**—[6]किं अण्णं । जङ्घाबलं एव्व ।

---

१. अहो नवनीतकल्पहृदय आर्यपुत्रः ।
२. बकुलावलिके, एहि । अनुष्ठितमात्मनो नियोगं देव्यै निवेदयावः ।
३. विज्ञापय भर्तारं विसर्जयेति ।
४. अवहिता श्रृणु । आज्ञापयतु भर्ता ।
५. पूरय पूरय । अशोकः कुसुमं न दर्शयति । अयं पुनः पुष्प्यत्येव ।
६. किमन्यत् । जङ्घाबलमेव ।

---

स्पष्टोऽर्थः । अत्र प्रसक्त्या संग्रहो नाम संध्यङ्गमुक्तं भवति ॥ अहो नवनीतकल्पहृदय आर्यपुत्रः ॥ बकुलावलिके, एहि । अनुष्ठितमात्मनो नियोगं देव्यै निवेदयावः ॥ विज्ञापय भर्तारं विसर्जयेति ॥ अवहिता शृणु । आज्ञापयतु भर्ता ॥ **धृतिपुष्पेति** । स्पष्टोऽर्थः ॥ पूरय पूरय । अशोकः कुसुमं न दर्शयति । अयं पुनः पुष्प्यत्येव । अत्र संरब्धवचनात्तोटकं नाम संध्यङ्गमुक्तं भवति ॥ **वयस्येत्यादि** । का प्रतिपत्तिः को विचारः । क उपाय इत्यर्थः । अत्र भीतेर्गम्यमानार्थत्वाद्वेगो नाम संध्यङ्गमुक्तं भवति ॥ किमन्यत् । जङ्घाबलमेव ॥ बकुलावलिके,

**इरावती**—³बउलावलिए, तुए साहु उवक्कन्तं । दाणिं सफलब्भत्थणं करेहि उज्जउत्तं ।

**उभे**—²पसीददु भट्टिणी । काओ अह्मे भत्तुणो पणअपरिग्गहस्स । ( इति निष्क्रान्ते ।)

**इरावती**—³अविस्सणीआ पुरिसा । अत्तणो वञ्चणवअणं पमाणीकरिअ अक्खित्ताए वाहजणगीदगहीदचित्ताए विअ हरिणीए एदं ण विण्णादं ।

**विदूषकः**—(जनान्तिकम् ।) ⁴पडिजोएहि दाणिं किंपि । कम्मग्गहीदेण वि कुम्भीलएण संधिच्छेदे सिक्खिओम्मित्ति वत्तव्वं होदि ।

**राजा**—सुन्दरि, न मे मालविकया कश्चिदर्थः । मया त्वं चिरयसीति यथाकथंचिदात्मा विनोदितः ।

**इरावती**—⁵विस्संससणीओसि । मए ण विण्णादं ईरिसं विणोदव-

---

१. बकुलावलिके, त्वया साधूपक्रान्तम् । इदानीं सफलाभ्यर्थनं कुर्वार्यपुत्रम् ।

२. प्रसीदतु भट्टिनी । के आवां भर्तुः प्रणयपरिग्रहस्य ।

३. अविश्वसनीयाः पुरुषाः । आत्मनो वञ्चनावचनं प्रमाणीकृत्याक्षिप्तया व्याधजनगीतगृहीतचित्तया हरिण्यैतन्न विज्ञातम् ।

४. प्रतियोजयेदानीं किमपि । कर्मगृहीतेनापि कुम्भीलकेन संधिच्छेदे शिक्षितोऽस्मीति वक्तव्यं भवति ।

५. विश्वसनीयोऽसि । मया न विज्ञातमीदृशं विनोदवस्तुकमार्यपुत्रेणोपलब्धमिति । अन्यथा दुःखभागिन्यैवं न क्रियते ।

---

त्वया साधूपक्रान्तम् । इदानीं सफलाभ्यर्थनं कुर्वार्यपुत्रम् ॥ प्रसीदतु भट्टिनी । के आवां भर्तुः प्रणयपरिग्रहस्य ॥ अविश्वसनीयाः पुरुषाः । आत्मनो वञ्चनावचनं प्रमाणीकृत्याक्षिप्तया व्याधजनगीतगृहीतचित्तया हरिण्यैवैतन्न विज्ञातम् । एतदित्यनेन राज्ञा कृतं कपटकृत्यं परामृश्यते प्रतियोजयेदानीं किमपि । संधेः कृत्रिमभूसंधेश्छेदे भेदने । सुरङ्गाकरण इत्यर्थः । शिक्षितः अभ्यसितोऽस्मीति वक्तव्यं भवति । किमपि प्रतियोजय । उपपन्नमनुपपन्नं वा उत्तरं कुर्वित्यर्थः । विश्वसनीयोऽसि । मया न विज्ञातमीदृशं विनोदवस्तुकमार्यपुत्रेणोपलब्धमिति ।

त्थुअं अज्जउत्तेण उवलद्धं ति । अण्णहा दुक्खभाइणीए एव्वं ण करीअदि ।

**विदूषकः**—मा[1] तावदा तत्तभवदो दक्खिण्णस्स उअरोहं भणिदुं समावत्तिदिट्ठेण देवीए परिअणेण संकहाअवराहेण संधावीअदु । एत्थ तुमं एव्व पमाणं ।

**इरावती**—णं[2] संकहा णाम होदु । किंति अत्ताणं आआसइस्सं । (इति रुषा प्रस्थिता ।)

**राजा**—(अनुसरन् ।) प्रसीदतु भवती ।

(इरावती रशनासंधारितचरणा व्रजत्येव ।)

**राजा**—सुन्दरि, न शोभते प्रणयिनि जने निरपेक्षता ।

**इरावती**—सठ[3], अविस्ससणीअहिअओसि ।

**राजा**—

शठ इति मयि तावदस्तु ते
परिचयवत्यवधीरणा प्रिये ।
चरणपतितया न चण्डितां
विसृजसि मेखलयापि याचिता ॥ २० ॥

**इरावती**—इअं[4] पि हदासा तुमं एव्व अणुसरदि । (इति रशनामादाय राजानं ताडयितुमिच्छति ।)

---

१. मा तावता तत्रभवतो दाक्षिण्यस्योपरोधं भणितुं समापत्तिदृष्टेन देव्याः परिजनेन संकथापराधेन संधाप्यताम् । अत्र त्वमेव प्रमाणम् ।

२. ननु संकथा नाम भवतु । किमित्यात्मानमायासयिष्यामि ।

३. शठ, अविश्वसनीयहृदयोऽसि ।

४. इयमपि हताशा त्वामेवानुसरति ।

---

अन्यथा दुःखभागिन्यैवं न क्रियते ॥ विश्वसनीय इत्यत्र विपरीतलक्षणानुसंधेया ॥ मा तावता तत्रभवतो दाक्षिण्यस्योपरोधं भणितुं समापत्तिदृष्टेन देव्याः परिजनेन संकथापराधेन संधाप्यताम् । अत्र त्वमेव प्रमाणम् ॥ ननु संकथा नाम भवतु । किमित्यात्मानमायासयिष्यामि ॥ शठ, अविश्वसनीयहृदयोऽसि ॥ **शठ इत्यादि** । हे प्रिये, परिचयवति परिचयः संस्तवो यस्य स परिचयवान् । अतिशायने मतुप् ।

राजा—इयमिरावती

बाष्पासारा हेमकाञ्चीगुणेन
श्रोणीबिम्बादप्युपेक्षाच्युतेन ।
चण्डी चण्डं हन्तुमभ्युद्यता मां
विद्युद्दाम्ना मेघराजीव विन्ध्यम् ॥ २१ ॥

इरावती—किं[1] भं एव्व भूओ वि अवरद्धं करेसि ।

राजा—(सरशनं हस्तमवलम्बयति ।)

अपराधिनि मयि दण्डं संहरसि किमुद्यतं कुटिलकेशि ।
वर्धयसि विलसितं त्वं दासजनायाद्य कुप्यसि च ॥ २२ ॥

नूनमिदमनुज्ञातम् । (इति पादयोः पतति ।)

इरावती—णे[2] खु इमे मालविआचलणा, जा दे हरिसदोहलं पूरयिस्सन्ति । (इति निष्क्रान्ता सह चेट्या ।)

विदूषकः—उट्ठेहि[3] । किदप्पसादोऽसि ।

राजा—(उत्थाय इरावतीमपश्यन् ।) कथं गतैव प्रिया ।

विदूषकः—वअस्स[4], दिट्ठिआ इमस्स अविणअस्स अप्पसण्णा

१. किं मामेव भूयोऽप्यपराद्धां करोषि ।
२. न खल्विमौ मालविकाचरणौ, यौ ते हर्षदोहदं पूरयिष्यतः ।
३. उत्तिष्ठ । कृतप्रसादोऽसि ।
४. वयस्य, दिष्ट्या अनेनाविनयेनाप्रसन्ना गतैषा तद्वयं शीघ्रमपक्रामामः । यावदङ्गारको राशिमिवानुवक्रं प्रतिगमनं न करोति ।

तस्मिन्मयि शठ इति गूढविप्रियकारीति अवधीरणा तिरस्कारोऽस्तु । अतः 'अतिपरिचयादवज्ञा' इति वदन्ति । तस्मादियमवधीरणा युक्तैवेत्यर्थः । हे चण्डि अत्यन्तकोपने, चरणपतितया मेखलया रशनया याचितापि प्रार्थितापि तामवधीरणां न विसृजसि न त्यजसि । किमिदं युक्तमिति शेषः ॥ इयमपि हताशा त्वामेवानुसरति ॥ **बाष्पासारेत्यादि** । स्पष्टोऽर्थः ॥ किं मामेव भूयोऽप्यपराद्धां करोषि ॥ **अपराधिनीत्यादि** । स्पष्टोऽर्थः ॥ **नूनमित्यादि** । इदमेतद्रशनासंहरणमनुज्ञातमनुमतम् । मत्प्रार्थनाया इति शेषः ॥ न खल्विमौ मालविकाचरणौ, यौ ते हर्षदोहदं पूरयिष्यतः ॥ उत्तिष्ठ । कृतप्रसादोऽसि ॥ वयस्य, दिष्ट्या अनेनाविनयेना-

गदा एसा । ता वअं सिग्घं अवक्कमाम । जाव अङ्गारओ रासिं विअ अणुवङ्कं परिगमणं ण करेदि ।

राजा—अहो मदनस्य वैषम्यम् ।

मन्ये प्रियाहृतमनास्तस्याः प्रणिपातलङ्घनं सेवाम् ।
एवं हि प्रणयवती सा शक्यमुपेक्षितुं कुपिता ॥ २३ ॥

(इति निष्क्रान्तः सह वयस्येन । )

इति तृतीयोऽङ्कः ।

---

प्रसन्ना गतैषा । तस्माद्वयं शीघ्रमपक्रमामः । यावदङ्गारको राशिमिवानुवक्रं प्रतिगमनं न करोति ॥ **मन्य इत्यादि** । प्रियाहृतमना मालविकाहृतमनाः प्रणिपातलङ्घनं प्रणामातिक्रमं तस्या इरावत्याः सेवामनुकूलाचरणं मन्ये । सेवायाः फलमाह—कुपिता क्रुद्धा प्रणयवती प्रेमवती सा इरावती एवमनेन क्रमेण प्रणिपातलङ्घनरूपेणोपेक्षितुमौदासीन्येन वर्तितुं शक्यं हि शक्या खलु । शक्यमिति निपातः । अत्र बीजानुसंधानादाक्षेपो नाम संध्यङ्गमुक्तं भवति । इदमनुसंधानमेवोत्तराङ्ककथोपयोगित्वाद्बिन्दुरित्यनुसंधेयम् ॥ **इति श्रीकाटयवेमभूपविरचिते कुमारगिरिराजीये मालविकाग्निमित्रव्याख्याने तृतीयोऽङ्कः ॥**



## चतुर्थोऽङ्कः ।

(ततः प्रविशति पर्युत्सुको राजा प्रतीहारी च ।)

**राजा**—(आत्मगतम् ।)

तामाश्रित्य श्रुतिपथगतामास्थया बद्धमूलः
संप्राप्तायां नयनविषयं रूढरागः प्रवालः ।
हस्तस्पर्शैर्मुकुलित इव व्यक्तरोमोद्गमत्वा-
त्कुर्यात्कान्तं मनसिजतरुर्मां रसज्ञं फलस्य ॥ १ ॥

(प्रकाशम् ।) सखे गौतम ।

**प्रतीहारी**—जेदु[1] जेदु भट्टा । असंणिहिदो गोदमो ।

**राजा**—(आत्मगतम् ।) आः, मालविकावृत्तान्तज्ञानाय मया प्रेषितः ।

(प्रविश्य ।)

**विदूषकः**—वड्ढदु[2] भवं ।

**राजा**—जयसेने, जानीहि तावत्क देवी धारिणी सरुजचरणत्वाद्विनोद्यत इति ।

**प्रतीहारी**—जं[3] देवो आणवेदि । (इति निष्क्रान्ता ।)

**राजा**—गौतम, को वृत्तान्तस्तत्रभवत्यास्ते सख्याः ।

**विदूषकः**—जो[4] बिडालगहीदाए परहुदिआए ।

**राजा**—(सविषादम् ।) कथमिव ।

---

१. जयतु जयतु भर्ता । असंनिहितो गौतमः ।

२. वर्धतां भवान् ।

३. यद्देव आज्ञापयति ।

४. यो बिडालगृहीतायाः परभृतिकायाः ।

---

कविरिदानीमङ्कान्तरमारभते—**ततः प्रविशतीत्यादिना** । **तामिति** । मुकुलित इव संजातमुकुल इव कान्तं कामनायुक्तं कुर्यादिति प्रार्थनायां लिङ् । अत्र प्रसजितं बीजं प्रकरीस्थाने कृतमिति मन्तव्यम् ॥ जयतु जयतु भर्ता । असंनिहितो गौतमः ॥ वर्धतां भवान् ॥ यद्देव आज्ञापयति ॥ यो विडालगृहीतायाः परभृ-

**विदूषकः**—[1]सा खु तवस्सिणी ताए पिङ्गलच्छीए सारभण्डभूघरए गुहाए विअ णिक्खित्ता ।

**राजा**—ननु मत्संपर्कमुपलभ्य ।

**विदूषकः**—[2]अह इं ।

**राजा**—क एवं विमुखोऽस्माकम् । येन चण्डीकृता देवी ।

**विदूषकः**—[3]सुणादु भवं । परिव्वाजिआए मे कहिदं । हिओ किल तत्तहोदी इरावदी रुअक्कन्तचलणं देविं सुहपुच्छिआ आअदा ।

**राजा**—ततस्ततः ।

**विदूषकः**—[4]तदो सा देवीए पुच्छिदा । किंणु ओवलोइदो वल्लहजणो त्ति । ताए उत्तं । मन्दो वो उवआरो । जं परिजणे संकन्तं वल्लहत्तणं ण जाणीअदि ।

**राजा**—निर्भेदाद्दतेऽपि मालविकायामयमुपन्यासः शङ्कयति ।

**विदूषकः**—[5]तदो ताए अणुखिज्जमाणा सा भवदो अविणअं अन्तरेण परिगदत्था किदा ।

---

१. सा खलु तपस्विनी तया पिङ्गलाक्ष्या सारभाण्डभूगृहे गुहायामिव निक्षिप्ता ।

२. अथ किम् ।

३. शृणोतु भवान् । परिव्राजिकया मे कथितम् । ह्यः किल तत्रभवतीरावती रुजाक्रान्तचरणां देवीं सुखपृच्छिकागता ।

४. ततः सा देव्या पृष्टा । किं न्ववलोकितो वल्लभजन इति । तयोक्तम् । मन्दो व उपचारः । यत्परिजने संक्रान्तं वल्लभत्वं न ज्ञायते ।

५. ततस्तयानुखिद्यमाना सा भवतोऽविनयमन्तरेण परिगतार्था कृता ।

---

तिकायाः सा खलु तपस्विनी तया पिङ्गलाक्ष्या सारभाण्डभूगृहे गुहायामिव निक्षिप्ता ॥ अथ किम् ॥ शृणोतु भवान् । परिव्राजिकया मे कथितम् । ह्यः पूर्वेद्युः किल तत्रभवतीरावती रुजाक्रान्तचरणां देवीं सुखपृच्छिकया गता॥ततःसा देव्या पृष्टा। किं न्ववलोकितो वल्लभजन इति । तयोक्तम् । मन्दो व उपचारः । यत्परिजने संक्रान्तं वल्लभत्वं न ज्ञायते ॥ निर्भेदाद्दतेऽपि स्फुटीकरणं विनापि ॥ ततस्तयानुखिद्यमाना सा भवतोऽविनयमन्तरेण परिगतार्था कृता । धारिणी राजाविनयमिरावत्याः सकाश-

राजा—अहो दीर्घरोषता तत्रभवत्याः । अतः परं कथय ।

विदूषकः—किं[1] अदो वरं । मालविआ बउलावलिआ अ णिअलपदीओ अदिट्ठसुज्जपादं पादालवासं णाअकण्णआओ विअ अणुहोन्ति ।

राजा—कष्टं कष्टम् ।

मधुरस्वरा परभृता भ्रमरी च विबुद्धचूतसङ्गिन्यौ ।
कोटरमकालवृष्ट्या प्रबलपुरोवातया गमिते ॥ २ ॥

अप्यत्र कस्यचिदुपक्रमस्य गतिः स्यात् ।

विदूषकः—केहं[2] भविस्सदि । जं सारभाण्डघरए वाउदा माहविआ देवीए संदिट्ठा । मह अङ्गुलीअअमुद्दं अदेक्खिअ ण मोत्तव्वा, मालविआ बउलावलिआ अ त्ति ।

राजा—(निःश्वस्य । सपरामर्शम् ।) सखे, किमत्र कर्तव्यम् ।

विदूषकः—(विचिन्त्य ।) अत्थि[3] एत्थ उवाओ ।

राजा—क इव ।

विदूषकः—(सदृष्टिक्षेपम् । ) को[4] वि अदिट्ठो सुणोदि । कण्णे दे कहेमि । (इत्युपश्लिष्य कर्णे ।) एव्वं विअ । (इत्यावेदयति ।)

---

१. किमतः परम् । मालविका बकुलावलिका च निगलपद्यावदृष्टसूर्यपादं पातालवासं नागकन्यके इवानुभवतः ।

२. कथं भविष्यति । यत्सारभाण्डगृहे व्यापृता माधविका देव्या संदिष्टा । ममाङ्गुलीयकमुद्रामदृष्ट्वा न मोक्तव्या मालविका बकुलावलिका चेति ।

३. अस्त्यत्रोपायः ।

४. कोऽप्यदृष्टः शृणोति । कर्णे ते कथयामि । एवमिव ।

---

ज्ञातवतीत्यर्थः ॥ किमतः परम् । मालविका बकुलावलिका च निगलपद्यावदृष्टसूर्यपादं पातालवासं नागकन्यके इवानुभवतः ॥ **मधुरस्वरेत्यादि** । स्पष्टोऽर्थः॥ कथं भविष्यति । यत्सारभाण्डगृहे व्यापृता माधविका देव्या संदिष्टा । ममाङ्गुलीयकमुद्रामदृष्ट्वा न मोक्तव्या मालविका बकुलावलिका चेति ॥ अस्त्यत्रोपायः ॥ कोऽप्यदृष्टः शृणोति । कर्णे ते कथयामि । एवमिव । अत्र राज्ञः कर्णे विदूषकोक्त उपायो

राजा—(सहर्षम् ।) सुट्ठु । प्रयुज्यतां सिद्धये ।

(प्रविश्य ।)

प्रतीहारी—देवं, पवादसयणम्मि देवी णिसण्णा रत्तचन्दणधारिणा परिअणहत्थगदेण चलणेण भअवदीए कहाहिं विणोदिज्जमाणा चिट्ठदि ।

राजा—तेन ह्यसत्प्रदेशयोग्योऽयमवसरः ।

विदूषकः—तां गच्छदु भवं । अहं वि देविं पेक्खिदुं अरित्तपाणी भविस्सं ।

राजा—जयसेनायास्तावदस्मद्रहस्यं विदितं कुरु ।

विदूषकः—तह । (इति कर्णे ।) एव्वं विअ होदि । (इत्यावेद्य निष्क्रान्तः ।)

राजा—जयसेने, प्रवातशयनमार्गमादेशय ।

प्रतीहारी—इदो इदो देवो ।

(ततः प्रविशति शयनस्था देवी परिव्राजिका विभवतश्च परिवारः ।)

देवी—भअवदि, रमणिज्जं कहावत्थु । तदो तदो ।

परिव्राजिका—देवि, अतःपरं पुनःकथयिष्यामि ।

अत्र भगवान्विदिशेश्वरः संप्राप्तः ।

---

१. देव, प्रवातशयने देवी निषण्णा रक्तचन्दनधारिणा परिजनहस्तगतेन चरणेन भगवत्या कथाभिर्विनोद्यमाना तिष्ठति ।

२. तद्गच्छतु भवान् । अहमपि देवीं द्रष्टुमरिक्तपाणिर्भविष्यामि ।

३. तथा । एवमिव भवति ।

४. इत इतो देवः ।

५. भगवति, रमणीयं कथावस्तु । ततस्ततः ।

---

नियमेन मालविकाप्राप्तिहेतुत्वान्नियताप्तिर्नाम चतुर्थावस्था सूचिता॥अत्रपूर्वं प्रकरीस्थानोक्तबीजस्यानया नियताप्त्या समन्वयादवमर्शो नाम चतुर्थसंधिः प्रतिपादित इति मन्तव्यम्॥देव,प्रवातशयने देवी निषण्णा रक्तचन्दनधारिणा परिजनहस्तगतेन चरणेन भगवत्या कथाभिर्विनोद्यमाना तिष्ठति ॥ तस्माद्गच्छतु भवान्।अहमपि देवीं द्रष्टुमरिक्तपाणिर्भविष्यामि ॥ तथा । एवमिव भवति ॥ इत इतो देवः ॥ भगवति,

देवी—अह्मो,[1] भट्टा। (इत्युत्थातुमिच्छति।)

राजा—अलमलमुपचारयन्त्रणया।

अनुचितनूपुरविरहं नार्हसि तपनीयपीठिकालम्बि।
चरणं रुजा परीतं कलभाषिणि मां च पीडयितुम्॥ ३॥

धारिणी—जेदु[2] अज्जउत्तो।

परिव्राजिका—विजयतां देवः।

राजा—(परिव्राजिकां प्रणम्योपविश्य।) देवि, अपि सह्या वेदना।

धारिणी—अज्ज[3] अत्थि मे विसेसो।

(ततः प्रविशति यज्ञोपवीतबद्धाङ्गुष्ठः संभ्रान्तो विदूषकः।)

विदूषकः—परित्ताअदु[4] परित्ताअदु भवं। सप्पेणह्मि दट्ठो।

(सर्वे विषण्णाः।)

राजा—कष्टं कष्टम्। क भवान्परिभ्रान्तः।

विदूषकः—देविं[5] देक्खिस्सं ति आआरपुप्फग्गहणकारणादो पमदवणं गदोह्मि।

देवी—हद्धि[6] हद्धि। अहं एव्व बह्मणस्स जीविदसंसअणिमित्तं जादह्मि।

---

१. अहो, भर्ता।

२. जयत्वार्यपुत्रः।

३. अद्यास्ति मे विशेषः।

४. परित्रायतां परित्रायतां भवान्। सर्पेणास्मि दष्टः।

५. देवीं द्रक्ष्यामीत्याचारपुष्पग्रहणकारणात्प्रमदवनं गतोऽस्मि।

६. हा धिक् हा धिक्। अहमेव ब्राह्मणस्य जीवितसंशयनिमित्तं जातास्मि।

---

रमणीयं कथावस्तु। ततस्ततः॥ अहो, भर्ता॥ **अनुचितेति**। स्पष्टोऽर्थः॥ जयत्वार्यपुत्रः॥ अद्यास्ति मे विशेषः॥ **तत इति**। यज्ञोपवीतेन बद्धोऽङ्गुष्ठो यस्य स तथोक्तः। अत्र कल्पनाया गम्यमानत्वाच्चलनं नाम संध्यङ्गमुक्तं भवति॥ परित्रायतां परित्रायतां भवान्। सर्पेणास्मि दष्टः॥ देवीं द्रक्ष्यामीत्याचारपुष्पग्रहणकारणात्प्रमदवनं गतोऽस्मि॥ हा धिक् हा धिक्। अहमेव ब्राह्मणस्य जीवितसंशयनिमित्तं जातास्मि॥

**विदूषकः**—[1]तहिं असोअत्थवअकारणादो पसारिदे दक्खिणहत्थे कोडरणिग्गदेण सप्परूवेण कालेण दट्ठोह्मि। णं एदे दुवे दंसणपदाणि। (इति दंशं दर्शयति।)

**परिव्राजिका**—तेन हि दंशच्छेदः पूर्वकर्मेति श्रूयते। स तावदस्य क्रियताम्।

छेदो दंशस्य दाहो वा क्षतेर्वा रक्तमोचनम्।
एतानि दष्टमात्राणामायुष्याः प्रतिपत्तयः॥ ४॥

**राजा**—संप्रति विषवैद्यानां कर्म। जयसेने, ध्रुवसिद्धिः क्षिप्रमानीयताम्।

**प्रतीहारी**—[2]जं देवो आणवेदि। (इति निष्क्रान्ता।)

**विदूषकः**—[3]अहो, पावेण मिच्चुणा गहीदोह्मि।

**राजा**—मा कातरो भूः। अविषोऽपि कदाचिद्दंशो भवेत्।

**विदूषकः**—[4]कहं ण भाइस्सं। सिमसिमाअन्ति मे अङ्गाइं। (इति विषवेगं रूपयति।)

**देवी**—[5]हा दंसिदं असुहं विआरेण। अवलम्बध बह्मणं।

---

१. तस्मिन्नशोकस्तवककारणात्प्रसारिते दक्षिणहस्ते कोटरनिर्गतेन सर्परूपेण कालेन दष्टोऽस्मि। नन्वेते द्वे दंशपदे।

२. यद्देव आज्ञापयति।

३. अहो, पापेन मृत्युना गृहीतोऽस्मि।

४. कथं न भेष्यामि। सिमसिमायन्ति मेऽङ्गानि।

५. हा, दर्शितमशुभं विकारेण। अवलम्बध्वं ब्राह्मणम्।

---

तस्मिन्नशोकस्तवककारणात्प्रसारिते दक्षिणहस्ते कोटरनिर्गतेन सर्परूपेण कालेन दष्टोऽस्मि। नन्वेते द्वे दंशपदे॥ **छेदो दंशस्येत्यादि**। स्पष्टोऽर्थः॥ ध्रुवसिद्धिरिति तस्य वैद्यस्य नाम॥ यद्देव आज्ञापयति॥ अहो, पापेन मृत्युना गृहीतोऽस्मि॥ कथं न भेष्यामि। सिमसिमायन्ति मेऽङ्गानि। अनेन संतापः सूच्यते। विषवेगं विषप्राप्तिं रूपयति प्रकाशयति। विषवेगास्तु वसन्तराजीये कथिताः—'वैवर्ण्यं वेपथुर्दाहः फेनः स्कन्दस्य भञ्जनम्। दुःखं जाड्य मृतिश्चेति विषवेगाः स्युरष्टधा॥' इति॥ हा क-

(परिव्राजिका ससंभ्रममवलम्बते ।)

**विदूषकः**—(राजानं विलोक्य ।) [1]भोः, भवदो बाल्लादोवि पिअ-वअस्सोह्मि । तं विआरिअ अवुत्ताए मे जणणीए जोगक्खेमं वहेसु ।

**राजा**—मा भैषीर्गौतम । स्थिरो भव । अचिरात्त्वां वैद्यश्चिकित्सिष्यति ।

(प्रविश्य ।)

**जयसेना**—[2]देव, आणाविदो धुवसिद्धी विण्णावेदि । इह एव्व आणीअदु सो गोदमोत्ति ।

**राजा**—तेन हि प्रतिगृहीतमेनं तत्रभवतः सकाशं प्रापय ।

**जयसेना**—[3]तहा ।

**विदूषकः**—(देवीं विलोक्य ।) [4]भोदि, जीवेअं वा ण वा । जं मए अत्तभवन्तं सेवमाणेण ते अवरद्धं तं मरिसेहि ।

**देवी**—[5]दीहाऊ होहि ।

(निष्क्रान्तौ विदूषकः प्रतीहारी च ।)

**राजा**—प्रकृतिभीरुस्तपस्वी ध्रुवसिद्धिमपि यथार्थनामानं सिद्धिमन्तं न मन्यते ।

---

१. भोः, भवतो बाल्यादपि प्रियवयस्योऽस्मि । तं विचार्यापुत्राया मे जनन्या योगक्षेमं वह ।

२. देव, आज्ञापितो ध्रुवसिद्धिर्विज्ञापयति । इहैवानीयतां स गौतम इति ।

३. तथा ।

४. भवति, जीवेयं वा न वा । यन्मयात्रभवन्तं सेवमानेन तेऽपराद्धं तन्मृष्यस्व ।

५. दीर्घायुर्भव ।

---

ष्टम् । दर्शितमशुभं विकारेण । अवलम्बध्वं ब्राह्मणम् ॥ भोः, भवतो बाल्यादपि प्रियवयस्योऽस्मि । तं विचार्यापुत्राया मे जनन्या योगक्षेमं वह ॥ देव, आज्ञापितो ध्रुवसिद्धिर्विज्ञापयति । इहैवानीयतां स गौतम इति ॥ तथा ॥ भवति, जीवेयं वा न वा । यन्मयात्रभवन्तं सेवमानेन तेऽपराद्धं तन्मृष्यस्व ॥ दीर्घायुर्भव ॥ जयतु भर्ता । ध्रुव-

(प्रविश्य ।)

**जयसेना**—जेदु[1] भट्टा । धुवसिद्धी विण्णावेदि । उदकुम्भविहाणेण सप्पमुद्दिअं किंपि कप्पिदव्वं । तं अण्णेसीअदु त्ति ।

**देवी**—इदं[2] सप्पमुद्दिअं अङ्गुलीअअं । पच्छा मम हत्थे देहि णं । (इत्यङ्गुलीयकं ददाति ।)

(प्रतीहारी गृहीत्वा स्थिता ।)

**राजा**—कर्मसिद्धावाशु प्रतिपत्तिमानय ।

**प्रतीहारी**—जं[3] देवो आणवेदि ।

**परिव्राजिका**—यथा मे हृदयमाचष्टे तथा निर्विषो गौतमः ।

**राजा**—भूयादेवम् ।

(प्रविश्य ।)

**जयसेना**—जेदु[4] देवो । णिवुत्तविसवेगो गोदमो मुहुत्तेण पकिदित्थो संवुत्तो ।

**देवी**—दिट्ठिआ[5] ।

**प्रतीहारी**—एसो[6] उण अमच्चो वाहतओ विण्णावेदि । राअकज्जं बहु मन्तिदव्वं । दंसणेण अणुग्गहं इच्छामि त्ति ।

---

१. जयतु भर्ता । ध्रुवसिद्धिर्विज्ञापयति । उदकुम्भविधानेन सर्पमुद्रितं किमपि कल्पयितव्यम् । तदन्विष्यतामिति ।

२. इदं सर्पमुद्रितमङ्गुलीयकम् । पश्चान्मम हस्ते देह्येतत् ।

३. यद्देव आज्ञापयति ।

४. जयतु देवः । निवृत्तविषवेगो गौतमो मुहूर्तेन प्रकृतिस्थः संवृत्तः ।

५. दिष्ट्या ।

६. एष पुनरमात्यो वाहतको विज्ञापयति । राजकार्यं बहु मन्त्रयितव्यम् । दर्शनेनानुग्रहमिच्छामीति ।

---

सिद्धिर्विज्ञापयति । उदकुम्भविधानेन सर्पमुद्रितं किमपि कल्पयितव्यम् । तदन्विष्यतामिति ॥ इदं सर्पमुद्रितमङ्गुलीयकम् । पश्चान्मम हस्ते देह्येतत् ॥ यद्देव आज्ञापयति ॥ जयतु देवः । निवृत्तविषवेगो गौतमो मुहूर्तेन प्रकृतिस्थः संवृत्तः ॥ दिष्ट्या ॥ एष पुनरमात्यो वाहतको विज्ञापयति । राजकार्यं बहु मन्त्रयितव्यम् । दर्शनेनानुग्र-

देवी—[1]गच्छदु अज्जउत्तो कज्जसिद्धीए ।

राजा—आतपाक्रान्तोऽयमुद्देशः । शीतक्रिया चास्या रुजः प्रशस्ता । तदन्यत्र नीयतां शयनम् ।

देवी—[2]बालिआओ, अज्जउत्तवअणं अणुचिट्ठह ।

परिजनः—[3]तह ।

(निष्क्रान्ता देवी परिव्राजिका परिजनश्च ।)

राजा—जयसेने, मां गूढेन पथा प्रमदवनं प्रापय ।

प्रतीहारी—[4]इदो इदो देवो ।

राजा—जयसेने, समाप्तकरणीयो ननु गौतमः ।

प्रतीहारी—[5]अह इं ।

राजा—

इष्टाधिगमनिमित्तं प्रयोगमेकान्तसाध्यमपि मत्वा ।
संदिग्धमेव सिद्धौ कातरमाशङ्कते हृदयम् ॥ ५ ॥

(प्रविश्य ।)

विदूषकः—[6]वड्ढदु भवं । सिद्धाइं दे मङ्गलकम्माइं ।

राजा—जयसेने, त्वमपि नियोगमशून्यं कुरु ।

प्रतीहारी—[7]जं देवो आणवेदि । (इति निष्क्रान्ता ।)

---

१. गच्छत्वार्यपुत्रः कार्यसिद्धये ।
२. बालिकाः, आर्यपुत्रवचनमनुतिष्ठत ।
३. तथा ।
४. इत इतो देवः ।
५. अथ किम् ।
६. वर्धतां भवान् । सिद्धानि ते मङ्गलकर्माणि ।
७. यद्देव आज्ञापयति ।

---

हमिच्छामीति ॥ गच्छत्वार्यपुत्रः कार्यसिद्धये ॥ बालिका, आर्यपुत्रवचनमनुतिष्ठत ॥ तथा इत इतो देवः ॥ अथ किम् ॥ **इष्टाधिगमेत्यादि** । स्पष्टोऽर्थः ॥ वर्धतां भवान् । सिद्धानि ते मङ्गलकर्माणि ॥ यद्देव आज्ञापयति ॥ देव्या अङ्गुलीयकमुद्रां

राजा—वयस्य, क्षुद्रा माधविका । न किंचिद्विचारितमनया ।

विदूषकः—[1]देवीए अङ्गुलीअअमुद्दिअं देक्खिअ कहं विआरेदि ।

राजा—न खलु मुद्रामधिकृत्य ब्रवीमि । एतयोर्द्वयोः किंनिमित्तो मोक्षः । किं वा देव्याः परिजनमतिक्रम्य भवान्संदिष्ट इत्येवमनया प्रष्टव्यम् ।

विदूषकः—[2]णं पुच्छिदोह्मि । पुणो मन्दस्स मे तस्सिं पच्चुप्पण्णा मदी ।

राजा—कथ्यताम् ।

विदूषकः—[3]भणिदा मए । देव्वचिन्तएहिं विण्णाविदो राआ । सोवसग्गं वो णक्खत्तं । सव्वबन्धणमोक्खो करीअदु त्ति ।

राजा—(सहर्षम् ।) ततस्ततः ।

विदूषकः—[4]तं सुणिअ देवीए इरावदीचित्तं रक्खन्तीए राआ किल मोएदित्ति अहं संदिट्ठो त्ति । तदो जुज्जदि त्ति ताए एव्वं संपादिदो अत्थो ।

राजा—(विदूषकं परिष्वज्य ।) सखे, प्रियोऽहं तव ।

---

१. देव्या अङ्गुलीयकमुद्रां दृष्ट्वा कथं विचारयति ।

२. ननु पृष्टोऽस्मि । पुनर्मन्दस्य मे तस्मिन्प्रत्युत्पन्ना मतिः ।

३. भणिता मया । दैवचिन्तकैर्विज्ञापितो राजा । सोपसर्गं वो नक्षत्रम् । सर्वबन्धनमोक्षः क्रियतामिति ।

४. तच्छ्रुत्वा देव्येरावतीचित्तं रक्षन्त्या राजा किल मोचयतीत्यहं संदिष्ट इति । ततो युज्यत इति तयैवं संपादितोऽर्थः ।

---

दृष्ट्वा कथं विचारयति ॥ ननु पृष्टोऽस्मि । पुनर्मन्दस्य मे तस्मिन्प्रत्युत्पन्ना मतिः ॥ भणिता मया । दैवचिन्तकैर्विज्ञापितो राजा । सोपसर्गं वो नक्षत्रम् । सर्वबन्धनमोक्षः क्रियतामिति ॥ तच्छ्रुत्वा देव्येरावतीचित्तं रक्षन्त्या राजा किल मोचयती-

नहि बुद्धिगुणेनैव सुहृदामर्थदर्शनम् ।
कार्यसिद्धिपथः सूक्ष्मः स्नेहो नाप्युपलभ्यते ॥ ६ ॥

**विदूषकः**—[1]तुवरदु भवं समुद्दघरए सहीसहिदं मालविअं ठाविअ भवन्तं पच्चग्गदोह्मि ।

**राजा**—अहमेनां संभावयामि । गच्छाग्रतः ।

**विदूषकः**—[2]एदु भवं (परिक्रम्य ।) इदं समुद्दघरं ।

**राजा**—(साशङ्कम् ।) वयस्य, एषा कुसुमावचयव्यग्रहस्ता सख्यास्ते परिचारिका चन्द्रिका संनिकृष्टमागच्छति । इतस्तावदावां भित्तिगूढौ भवावः ।

**विदूषकः**—[3]अहो कुम्भीलएहिं कामुएहिं च परिहरणीआ खु चन्द्रिआ ।

(उभे यथोक्तं कुरुतः ।)

**राजा**—गौतम, कथं नु ते सखी मां प्रतिपालयति । एहि । एनां गवाक्षमाश्रित्य विलोकयामि ।

**विदूषकः**—[4]तह ।

(उभौ विलोकयन्तौ तिष्ठतः ।)

(ततः प्रविशति मालविका बकुलावलिका च ।)

**बकुलावलिका**—[5]सहि, पणम भट्टारं ।

---

१. त्वरतां भवान् । समुद्रगृहे सखीसहितां मालविकां स्थापयित्वा भवन्तं प्रत्युद्गतोऽस्मि ।

२. एतु भवान् । इदं समुद्रगृहम् ।

३. अहो कुम्भिलकैश्च परिहरणीया खलु चन्द्रिका ।

४. तथा ।

५. सखि, प्रणम भर्तारम् ।

---

त्वहं संदिष्ट इति । ततो युज्यत इति तयैवं संपादितोऽर्थः ॥ **नहि बुद्धीत्यादि।** स्पष्टोऽर्थः ॥ त्वरतां भवान् । समुद्रगृहे सखीसहितां मालविकां स्थापयित्वा भवन्तं प्रत्युद्गतोऽस्मि ॥ एतु भवान् । इदं समुद्रगृहम् ॥ अहोइत्यामन्त्रणे ।कुम्भिलकैःकामुकैश्च परिहरणीया खलु चन्द्रिका ॥ तथा ॥ सखि, प्रणम भर्तारम् ॥ नमस्ते ॥ सखि,

**मालविका**—[1]णमो दे ।

**राजा**—शङ्के मे प्रतिकृतिं निर्दिशति ।

**मालविका**—(सहर्षम् । द्वारमवलोक्य ।) [2]हला, मं विप्पलम्भेसि ।

**राजा**—हर्षविषादाभ्यामत्रभवत्याः प्रीतोऽस्मि ।

सूर्योदये भवति या सूर्यास्तमये च पुण्डरीकस्य ।
वदनेन सुवदनायास्ते समवस्थे क्षणादूढे ॥ ७ ॥

**बकुलावलिका**—[3]णं एसो चित्तगदो भट्टा ।

**उभे**—(प्रणिपत्य ।) [4]जेदु भट्टा ।

**मालविका**—[5]हला, तदा संभमदिट्ठे भट्टिणो रूवे जहा ण वितिण्हह्मि, तहा अज्जवि मए भाविदो अवितिण्हदंसणो भट्टा ।

**विदूषकः**—[6]सुदं भवदा । तत्तहोदी चित्ते जहा दिट्ठो तहा दिट्ठो भवं ति मन्तेदि । मुद्धा दाणिं मञ्जूसा विअ रअणभण्डअं जोव्वणगव्वं वहेसि ।

**राजा**—सखे, कुतूहलवानपि निसर्गशालीनः स्त्रीजनः । पश्य ।

कार्त्स्न्येन निर्वर्णयितुं च रूप-
मिच्छन्ति तत्पूर्वसमागमानाम् ।

---

१. नमस्ते ।

२. सखि, मां विप्रलम्भयसि ।

३. नन्वेष चित्रगतो भर्ता ।

४. जयतु भर्ता ।

५. सखि, तदा संभ्रमदृष्टे भर्तू रूपे यथा न वितृष्णास्मि, तथाद्यापि मया भावितोऽवितृष्णदर्शनो भर्ता ।

६. श्रुतं भवता । तत्रभवती चित्रे यथा दृष्टस्तथा दृष्टो भवानिति मन्त्रयति । मुग्धेदानीं मञ्जूषेव रत्नभाण्डं यौवनगर्वं वहसे ।

---

यां विप्रलम्भयसि॥ **सूर्योदय इत्यादि** । स्पष्टोऽर्थः॥नन्वेष चित्रगतो भर्ता॥जयतु भर्ता॥सखि,तदा संभ्रमदृष्टे भर्तू रूपे यथा न वितृष्णास्मि,तथाद्यापि मयाभावितोऽवितृष्णदर्शनो भर्ता॥श्रुतं भवता।तत्रभवती चित्रे यथा दृष्टस्तथा दृष्टोभवानिति मन्त्रयति। मुग्धेदानीं मञ्जूषेव रत्नभाण्डं यौवनगर्वं वहसे॥**कार्त्स्न्येनेत्यादि**।स्पष्टोर्थः॥

न च प्रियेष्वायतलोचनानां
समग्रवृत्तीनि विलोचनानि ॥ ८ ॥

**मालविका**—[1]हला, का एसा पासपरिउत्तवअणेण भट्टिणा सिणिद्धाए दिट्ठीए णिज्झाईअदि ।

**वकुलावलिका**—[2]णं इअं पासगदा इरावदी ।

**मालविका**—[3]सहि, अदक्खिणो विअ भट्टा मे पडिभादि । जो सव्वं देवीजणं उज्झिअ एक्काए मुहे बद्धलक्खो ।

**वकुलावलिका**—(आत्मगतम् ।) [4]चित्तगदं भट्टारं परमत्थदो संकप्पिअ असूअदि । होदु । क्रीडिस्सं दाव एदाए । (प्रकाशम् ।) हला, भट्टिणो वल्लहा एसा ।

**मालविका**—[5]तदो किं दाणिं अत्ताणं आआसइस्सं । (इति सासूयं परावर्तते ।)

**राजा**—सखे, पश्य ।

भ्रूभङ्गभिन्नतिलकं स्फुरिताधरोष्ठं
सासूयमाननमितः परिवर्तयन्त्या ।
कान्तापराधकुपितेष्वनया विनेतुः
संदर्शितेव ललिताभिनयस्य शिक्षा ॥ ९ ॥

---

१. सखि, कैषा पार्श्वपरिवृत्तवदनेन भर्त्रा मे स्निग्धया दृष्ट्या निध्यायते ।

२. नन्वियं पार्श्वगतेरावती ।

३. सखि, अदक्षिण इव भर्ता मे प्रतिभाति । यः सर्वं देवीजनमुज्झित्वैकस्या मुखे बद्धलक्ष्यः ।

४. चित्रगतं भर्तारं परमार्थतः संकल्प्यासूयति । भवतु । क्रीडिष्यामि तावदेतया । सखि, भर्तुर्वल्लभैषा ।

५. ततः किमिदानीमात्मानमायासयिष्यामि ।

---

सखि, कैषा पार्श्वपरिवृत्तवदनेन भर्त्रा स्निग्धया दृष्ट्या निध्यायते ॥ नन्वियं पार्श्वगतेरावती ॥ सखि, अदक्षिण इव भर्ता मे प्रतिभाति । यः सर्वं देवीजनमुज्झित्वैकस्या मुखे बद्धलक्ष्यः ॥ चित्रगतं भर्तारं परमार्थतः संकल्प्यासूयति । भवतु क्रीडिष्यामि तावदेतया । सखि, भर्तुर्वल्लभैषा ॥ ततः किमिदानीमात्मानमायासयिष्यामि ॥ **भ्रूभङ्गेत्यादि** । स्पष्टोऽर्थः ॥ अनुनयसज्ज इदानीं भव ॥

**विदूषकः**—[1]अणुणअसज्जो दाणिं होहि ।

**मालविका**—[2]अज्जगोदमो एत्थ ण संसेवदि । (पुनः स्थानान्तराभिमुखी भवितुमिच्छति ।)

**बकुलावलिका**—(मालविकां रुद्ध्वा ।) [3]ण खु कुविदा दाणिं तुमं ।

**मालविका**—[4]जइ चिरं कुविदं एव्व मं मण्णेसि, एसो पच्चाणीअदि कोवो ।

**राजा**—(उपेत्य ।)

कुप्यसि कुवलयनयने चित्रार्पितचेष्टया किमेतन्मे ।
ननु तव साक्षादयमहमनन्यसाधारणो दासः ॥ १० ॥

**बकुलावलिका**—[5]जेदु भट्टा ।

**मालविका**—(आत्मगतम् ।) [6]कहं चित्तगदो भट्टा मए असूइदो । (इति सप्रणयवदनमञ्जलिं करोति ।)

(राजा मदनकातर्यं रूपयति ।)

**विदूषकः**—[7]किं भवं उदासीणो विअ ।

**राजा**—अविश्वसनीयत्वात्सख्यास्तव ।

**विदूषकः**—[8]अत्तहोदीए अअं तुह अविस्सासो ।

**राजा**—श्रूयताम् ।

---

१. अनुनयसज्ज इदानीं भव ।
२. आर्यगौतमोऽत्र न संसेवते ।
३. न खलु कुपितेदानीं त्वम् ।
४. यदि चिरं कुपितामेव मां मन्यसे, एष प्रत्यानीयते कोपः ।
५. जयतु भर्ता ।
६. कथं चित्रगतो भर्ता मयासूयितः ।
७. किं भवानुदासीन इव ।
८. अत्रभवत्यामयं तवाविश्वासः

---

आर्यगौतमोऽत्र न संसेवते ॥ न खलु कुपितेदानीं त्वम् ॥ यदि चिरं कुपितामेव मां मन्यसे, एष प्रत्यानीयते कोपः ॥ **कुप्यसीत्यादि** । स्पष्टोऽर्थः ॥ जयतु भर्ता ॥ कथं चित्रगतो भर्ता मयासूयितः ॥ किं भवानुदासीन इव ॥ अत्र

पथि नयनयोः स्थित्वा स्थित्वा तिरोभवति क्षणा-
त्सरति सहसा बाह्वोर्मध्यं गतापि सखी तव ।
मनसिजरुजा क्लिश्यत्येवं समागममायया
कथमिव सखे विस्रब्धं स्यादिमां प्रति मे मनः ॥ ११ ॥

**बकुलावलिका**—[1]सहि, बहुसो किल भट्टा विप्पलद्धो । दात्तुए अत्ता विस्सासणिज्जो करीअदु ।

**मालविका**—[2]सहि, मह उण मन्दभग्गाए सिविणसमाअमो वि भट्टिणो दुल्लहो आसि ।

**बकुलावलिका**—[3]भट्टा कहेदु से उत्तरं ।

**राजा**—

उत्तरेण किमात्मैव पञ्चबाणाग्निसाक्षिकम् ।
तव सख्यै मया दत्तो न सेव्यः सेविता रहः ॥ १२ ॥

**बकुलावलिका**—[4]अणुगहीदम्ह ।

**विदूषकः**—(परिक्रम्य ।) [5]बहुलावलिए, एसो बालासोअरुक्खस्स पल्लवाइं लङ्घेदि हरिणो । णिवारेम णं ।

---

१. सखि, बहुशः किल भर्ता विप्रलब्धः । तावत्त्वयात्मा विश्वसनीयः क्रियताम् ।

२. सखि, मम पुनर्मन्दभाग्यायाः स्वप्नसमागमोऽपि भर्तुर्दुर्लभ आसीत् ।

३. भर्ता कथयत्वस्या उत्तरम् ।

४. अनुगृहीताः स्मः ।

५. बकुलावलिके, एष बालाशोकवृक्षस्य पल्लवानि लङ्घयति हरिणः । निवारयाम एनम् ।

---

भवत्यामयं तवाविश्वासः । अस्मिन्वाक्ये काकुरनुसंधेया ॥ **पथि नयनयोरित्यादि** । स्पष्टोऽर्थः ॥ सखि, बहुशः किल भर्ता विप्रलब्धः । तावत्त्वयात्मा विश्वसनीयः क्रियताम् ॥ सखि, मम पुनर्मन्दभाग्यायाः स्वप्नसमागमोऽपि भर्तुर्दुर्लभ आसीत् ॥ भर्ता कथयत्वस्या उत्तरम् ॥ **उत्तरेणेत्यादि** । स्पष्टोऽर्थः ॥ अनुगृहीताः स्मः ॥ बकुलावलिके, एष बालाशोकवृक्षस्य पल्लवानि लङ्घयति

बकुलावलिका—[1]तह । (इति प्रस्थिता ।)

राजा—वयस्य, एवमेवास्मिन्रक्षणक्षणेऽवहितेन त्वया भवितव्यम् ।

विदूषकः—[2]एवं वि गोदमो संदिसेअदि ।

बकुलावलिका—(परिक्रम्य ।) [3]अज्ज गोदम, अहं अप्पआसे चिट्ठामि । तुमं दुवाररक्खओ होहि ।

विदूषकः—[4]जुज्जइ ।

(निष्क्रान्ता बकुलावलिका ।)

विदूषकः—[5]इमं दाव फलिहक्खम्भं अस्सिदो होमि । (इति तथा-कृत्वा ।) अहो सुहप्फरिसदा सिलाविसेसस्स । (इति निद्रायते ।)

(मालविका ससाध्वसा तिष्ठति ।)

राजा—

विसृज सुन्दरि संगमसाध्वसं
तव चिरात्प्रभृति प्रणयोन्मुखे ।
परिगृहाण गते सहकारतां
त्वमतिमुक्तलताचरितं मयि ॥ १३ ॥

मालविका—[6]देवीए भएण अत्तणोवि पिअं कादुं ण पारेमि ।

---

१. तथा ।

२. एवमपि गौतमः संदिश्यते ।

३. आर्य गौतम, अहमप्रकाशे तिष्ठामि । त्वं द्वाररक्षको भव ।

४. युज्यते ।

५. इमं तावत्स्फटिकस्तम्भमाश्रितो भवामि । अहो सुखस्पर्शता शिलाविशेषस्य ।

६. देव्या भयेनात्मनोऽपि प्रियं कर्तुं न पारयामि ।

---

हरिणः । निवारयाम एनम् ॥ तथा ॥ एवमपि गौतमः संदिश्यते ॥ आर्य गौतम, अहमप्रकाशे तिष्ठामि । त्वं द्वाररक्षको भव ॥ युज्यते ॥ इमं तावत्स्फटिकस्तम्भमाश्रितो भवामि । अहो सुखस्पर्शता शिलाविशेषस्य ॥ **विसृजेत्यादि ।**

**राजा**—अयि, न भेतव्यम् ।

**मालविका**—(सोपालम्भम् ।) [1]जो ण भाअदि, सो मए भट्टिणी-दंसणे दिट्ठसामत्थो भट्टा ।

**राजा**—

दाक्षिण्यं नाम बिम्बोष्ठि बैम्बिकानां कुलव्रतम् ।
तन्मे दीर्घाक्षि ये प्राणास्ते त्वदाशानिबन्धनाः ॥ १४ ॥

तदनुगृह्यतां चिरानुरक्तोऽयं जनः । (इति संश्लेषमुपजनयति ।)

(मालविका परिहरति ।)

**राजा**—(आत्मगतम् ।) रमणीयः खलु नवाङ्गनानां मदनविषयावतारः । तथा हि ।

हस्तं कम्पयते रुणद्धि रशनाव्यापारलोलाङ्गुलीः
स्वौ हस्तौ नयति स्तनावरणतामालिङ्ग्यमाना बलात् ।
पातुं पक्ष्मलनेत्रमुन्नमयतः साचीकरोत्याननं
व्याजेनाप्यभिलाषपूरणसुखं निर्वर्तयत्येव मे ॥ १५ ॥

(ततः प्रविशतीरावती निपुणिका च ।)

**इरावती**—[2]हञ्जे णिउणिए, सच्चं तुमं परिगदत्था चन्दिआए । समुद्दघरअलिन्दसइदो एआई अज्जगोदमो दिट्ठो त्ति ।

**निपुणिका**—[3]अण्णहा कहं भट्टिणीए विण्णावेमि ।

---

१. यो न बिभेति, स मया भट्टिनीदर्शने दृष्टसामर्थ्यो भर्ता ।

२. हञ्जे निपुणिके, सत्यं त्वं परिगतार्था चन्द्रिकया । समुद्रगृहालिन्द-शयित एकाकी आर्यगौतमो दृष्ट इति ।

३. अन्यथा कथं भट्टिन्यै विज्ञापयामि ।

---

स्पष्टोऽर्थः ॥ देव्या भयेनात्मनोऽपि प्रियं कर्तुं न पारयामि ॥ यो न बिभेति, स मया भट्टिनीदर्शने दृष्टसामर्थ्यो भर्ता ॥ **दाक्षिण्यमिति** । स्पष्टोऽर्थः । बैम्बिकास्तद्वंश्या राजानः ॥ **हस्तमित्यादि** । स्पष्टोऽर्थः ॥ हञ्जे निपुणिके, सत्यं त्वं परिगतार्था चन्द्रिकया । समुद्रगृहालिन्दशयित एकाकी आर्यगौतमो दृष्ट इति ॥ अन्यथा कथं भट्टिन्यै विज्ञापयामि ॥ तेन हि तत्रैव गच्छामः । संश-

**इरावती**—तेणं हि तहिं एव्व गच्छामो । संसआदो मुत्तं पिअवअस्सं पुच्छिदुं च ।

**निपुणिका**—सावसेसं विअ भट्टिणीए वअणं ।

**इरावती**—अण्णं च चित्तगदं अज्जउत्तं पसादेदुं ।

**निपुणिका**—अह कहं दाणिं एव्व ण प्पसादीअदि ।

**इरावती**—मुद्धे, जारिसो चित्तगदो णं तारिसो एव्व अण्णसंकन्तहिअओ अज्जउत्तो । केवलं उअआरादिक्कमं पमज्जिदुं अअं आरम्भो ।

**निपुणिका**—इदो इदो भट्टिणी ।

(उभे परिक्रामतः ।)

(प्रविश्य ।)

**चेटी**—जेदु भट्टिणी । देवी भणादि । ण मे मच्छरस्स एसो कालो । तेण खु बहुमाणं वड्ढेदुं वअस्साए सह णिअलबन्धणे किदा

१. तेन हि तत्रैव गच्छामः संशयान्मुक्तं प्रियवयस्यं प्रष्टुं च ।

२. सावशेषमिव भट्टिन्या वचनम् ।

३. अन्यच्च चित्रगतमार्यपुत्रं प्रसादयितुम् ।

४. अथ कथमिदानीमेव न प्रसाद्यते ।

५. मुग्धे, यादृशश्चित्रगतो ननु तादृश एवान्यसंक्रान्तहृदय आर्यपुत्रः । केवलमुपचारातिक्रमं प्रमार्जितुमयमारम्भः ।

६. इत इतो भट्टिनी ।

७. जयतु भट्टिनी । देवी भणति । न मे मत्सरस्यैष कालः । तेन खलु बहुमानं वर्धयितुं वयस्यया सह निगलबन्धनं कृता मालविका । यद्यनुमन्यस आर्यपुत्रस्य प्रियं कर्तुं तथा करोमि । यत्तवेष्टं तन्मे भणेति ।

यावन्मुक्तं प्रियवयस्य प्रष्टुं च ॥ सावशेषमिव भट्टिन्या वचनम् ॥ अन्यच्च चित्रगतमार्यपुत्रं प्रसादयितुम् ॥ अथ कथमिदानीमेव न प्रसाद्यते ॥ मुग्धे, यादृशश्चित्रगतो ननु तादृश एवान्यसंक्रान्तहृदय आर्यपुत्रः । केवलमुपचारातिक्रमं प्रमार्जितुमयमारम्भः ॥ इत इतो भट्टिनी ॥ जयतु भट्टिनी । देवी भणति । न मे मत्सरस्यैष कालः । तेन खलु बहुमानं वर्धयितुं वयस्यया सह निगलबन्धनं

मालविआ। जइ अणुमण्णसि अज्जउत्तस्स पिअं कादुं तहा करेमि। जं तुह इच्छिअं तं मे भणाहि त्ति।

**इरावती**—णाअरिए[1], विण्णावेहि देविं। का वअं भट्टिणिं णिओजेदुं। परिअणणिअलणे दंसिदो मइ अणुग्गहो। कस्स वा पसादेण अअं जणो वड्ढदित्ति।

**चेटी**—तह[2]। (इति निष्क्रान्ता।)

**निपुणिका**—(परिक्रम्यावलोक्य च।) भट्टिणि[3], एसो दुवारुद्देसे समुद्दघरअस्स विपणिगदो विअ बलीवद्दो अज्जगोदमो आसीणो एव्व णिद्दाअदि।

**इरावती**—अच्चाहिदं[4]। ण खु सावसेसो विसविआरो हवे।

**निपुणिका**—पसण्णमुहवण्णो[5] दीसइ। अवि अ धुवसिद्धिणा चिइच्छिदो। ता से असङ्कणिज्जं पावं।

---

१. नागरिके, विज्ञापय देवीम्। का वयं भट्टिनीं नियोजयितुम्। परिजननिगलने दर्शितो मय्यनुग्रहः। कस्य वा प्रसादेनायं जनो वर्धत इति।

२. तथा।

३. भट्टिनि, एष द्वारोद्देशे समुद्रगृहस्य विपणिगत इव बलीवर्द आर्यगौतम आसीन एव निद्रायते।

४. अत्याहितम्। न खलु सावशेषो विषविकारो भवेत्।

५. प्रसन्नमुखवर्णो दृश्यते। अपि च ध्रुवसिद्धिना चिकित्सितः। तदस्याशङ्कनीयं पापम्।

---

कृता मालविका। यद्यनुमन्यसे आर्यपुत्रस्य प्रियं कर्तुं तथा करोमि। यत्तवेष्टं तन्मे भणेति॥ नागरिके, विज्ञापय देवीम्। का वयं भट्टिणीं नियोजयितुम्। परिजननिगलनेन दर्शितो मय्यनुग्रहः। कस्य वा प्रसादेनायं जनो वर्धत इति॥ तथा॥ भट्टिनि, एष द्वारोद्देशे समुद्रगृहस्य विपणिगत इव बलीवर्द आर्यगौतम आसीन एव निद्रायते॥अत्याहितम्। अत्याहितं नाम जीवानपेक्षि कर्म।'अत्याहितं महाभीतिः कर्म जीवानपेक्षि च' इत्यमरसिंहः। न खलु सावशेषो विषविकारो भवेत्॥ प्रसन्नमुखवर्णो दृश्यते। अपिच ध्रुवसिद्धिना चिकित्सितः। तस्मादस्याशङ्कनीयं पापम्॥ भवति मालविके॥ श्रुतं भट्टिन्या। कस्यैष आत्मनियोग-

**विदूषकः**—(उत्स्वप्नायते ।) [1]भोदि मालविए ।

**निपुणिका**—[2]सुदं भट्टिणीए कस्स एसो अत्तणिओअसंपादणे विस्ससणिज्जो हदासो । सव्वाकलं इदो एव्व सोत्थिवाअणमोदएहिं कुच्छिं पूरिअ संपदं मालविअं सिविणावेदि ।

**विदूषकः**—[3]इरावदिं अदिक्कमन्ती होहि ।

**निपुणिका**—[4]एदं अच्चाहिदं । इमं भुअङ्गभीरुअं बह्मबन्धुं इमिणा भुअङ्गकुडिलेण दण्डकट्टेण खम्भन्तरिदा भाअइस्सं ।

**इरावती**—[5]अरुहदि एव्व किदग्घो उवद्दवस्स ।

(निपुणिका विदूषकस्योपरि दण्डकाष्ठं पातयति ।)

**विदूषकः**—(सहसा प्रबुध्य ।) [6]अविहा अविहा । भो वअस्स, सप्पो मे उवरि पडिदो ।

**राजा**—(सहसोपसृत्य ।) सखे, न भेतव्यं न भेतव्यम् ।

---

१. भवति मालविके ।

२. श्रुतं भट्टिन्या । कस्यैष आत्मनियोगसंपादने विश्वसनीयो हताशः । सर्वकालमित एव स्वस्तिवाचनमोदकैः कुक्षिं पूरयित्वा सांप्रतं मालविकां स्वप्नायते ।

३. इरावतीमतिक्रामन्ती भव ।

४. एतदत्याहितम् । इमं भुजंगभीरुं ब्रह्मबन्धुमनेन भुजंगकुटिलेन दण्डकाष्ठेन स्तम्भान्तरिता भीषयिष्यामि ।

५. अर्हत्येव कृतघ्न उपद्रवस्य ।

६. अविधा अविधा । भो वयस्य, सर्पो म उपरि पतितः ।

---

संपादने विश्वसनीयो हताशः । सर्वकालमित एव स्वस्तिवाचनमोदकैः कुक्षिं पूरयित्वा सांप्रतं मालविकां स्वप्नायते । अत्र दोषोद्घाटनादपवादो नाम संध्यङ्गमुक्तं भवति । तत्रैव रोषभाषणात्संफेटो नाम संध्यङ्गमुक्तं भवति ॥ इरावतीमतिक्रामन्ती भव ॥ एतदत्याहितम् । इमं भुजंगभीरुं ब्रह्मबन्धुमनेन भुजंगकुटिलेन दण्डकाष्ठेन स्तम्भान्तरिता भीषयिष्यामि ।अर्हत्येव कृतघ्न उपद्रवस्य ।'उवद्दवस्स' इत्यत्र क्वचित्, 'असादेः' इति प्राकृते कर्मणि षष्ठी॥अविधाअविधा । भो वयस्य,सर्पो म उपरि पतित

**मालविका**—(अनुसृत्य ।) [1]भट्टा, मा दाव सहसा णिक्कम । सप्पोत्ति भणीअदि ।

**इरावती**—[2]हद्धि हद्धि । भट्टा इदो एव्व धावदि ।

**विदूषकः**—(सप्रहासम् ।) [3]कहं दण्डकट्ठं एदं । अहं उण जाणे जं मए केदईकण्टएहिं डंसं करिअ सप्पस्स उवरि अअसो किदं, तं मे फलिदं ।

(प्रविश्य पटाक्षेपेण ।)

**बकुलावलिका**—[4]मा दाव भट्टा पविसदु । कुडिलगई सप्पो विअ दीसदि ।

**इरावती**—(स्तम्भान्तरिता राजानमुपेत्य ।) [5]अवि णिव्विग्घमणोरहो दिवासंकेदो मिहुणस्स ।

(सर्वे इरावतीं दृष्ट्वा संभ्रान्ताः ।)

**राजा**—प्रिये, अपूर्वोऽयमुपचारः ।

**इरावती**—[6]बउलावलिए, दिट्ठिआ दुच्चाहिआअविसआ संपुण्णा दे वइण्णा ।

---

१. भर्तः, मा तावत्सहसा निष्क्राम । सर्प इति भण्यते ।

२. हा धिक् हा धिक् । भर्ता इत एव धावति ।

३. कथं दण्डकाष्ठमेतत् । अहं पुनर्जाने यन्मया केतकीकण्टकैर्दंशं कृत्वा सर्पस्योपर्ययशः कृतम्, तन्मे फलितम् ।

४. मा तावद्भर्ता प्रविशतु । कुटिलगतिः सर्प इव दृश्यते ।

५. अपि निर्विघ्नमनोरथो दिवासंकेतो मिथुनस्य ।

६. बकुलावलिके, दिष्ट्या दूत्याधिकारविषया संपूर्णा ते प्रतिज्ञा ।

---

अत्रोद्वेजनाद्युक्तिर्नाम संध्यङ्गमुक्तं भवति॥भर्तः, मा तावत्सहसा निष्क्राम । सर्प इति भण्यते ॥ हा धिक् हा धिक् । भर्ता इत एव धावति ॥ कथं दण्डकाष्ठमेतत् । अहं पुनर्जाने । यन्मया केतकीकण्टकैर्दंशं कृत्वा सर्पस्योपर्ययशः कृतम्, तन्मे फलितम् ॥ मा तावद्भर्ता प्रविशतु । इह कुटिलगतिः सर्प इव दृश्यते ॥ अपि निर्विघ्नमनोरथो दिवासंकेतो मिथुनस्य ॥ बकुलावलिके, दिष्ट्या दूत्याधिकारवि-

बकुलावलिका—[१]पसीददु भट्टिणी । किं णु खु दद्दुरा वाहरन्ति त्ति देवीए पुढवीए देव्वो वरिसिदुं विरमदि ।

विदूषकः—[२]मा दाव । भोदीए दंसणमेत्तेण अत्तभवं पणिवादलङ्घणं विसुमरिदो । तुमं उण अज्जवि पसादं ण गेण्हसि ।

इरावती—[३]कुविदा दाणिं अहं किं करिस्सं ।

राजा—अस्थाने कोप इत्यनुपपन्नं त्वयि । तथा हि ।

कदा मुखं वरतनु कारणादृते
तवागतं क्षणमपि कोपपात्रताम् ।
अपर्वणि ग्रहकलुषेन्दुमण्डला
विभावरी कथय कथं भविष्यति ॥ १६ ॥

इरावती—[४]अट्ठाणेत्ति सुट्ठु वाहरिदं अज्जउत्तेण । अण्णसंकन्तेसु अह्माणं भाअहेएसु जदि उण कुप्पेअं, तदो हस्सा भवेअं ।

राजा—त्वमन्यथा कल्पयसि । अहं पुनः सत्यमेव कोपस्थानं न पश्यामि ।

१. प्रसीदतु भट्टिनी । किं नु खलु दर्दुरा व्याहरन्ती देव्या पृथिव्यां देवो वर्षितुं विरमति ।

२. मा तावत् । भवत्या दर्शनमात्रेणात्रभवान्प्रणिपातलङ्घनं विस्मृतः । त्वं पुनरद्यापि न गृह्णासि ।

३. कुपितेदानीमहं किं करिष्यामि ।

४. अस्थान इति सुष्ठु व्याहृतमार्यपुत्रेण । अन्यसंक्रान्तेष्वस्माकं भागधेयेषु यदि पुनः कुप्येयम्, ततो हास्या भवेयम् ।

पया संपूर्णा ते प्रतिज्ञा ॥ प्रसीदतु भट्टिनी । किं नु खलु दर्दुरा व्याहरन्त्याक्रोशन्तीति देव्यां पृथिव्यां देवो वर्षितुं विरमति ॥ मा तावत् । भवत्या दर्शनमात्रेणात्रभवान्प्रणिपातलङ्घनं विस्मृतः । त्वं पुनरद्यापि प्रसादं न गृह्णासि ॥ कुपितेदानीमहं किं करिष्यामि ॥ **कदेति** । स्पष्टोऽर्थः ॥ अस्थान इति सुष्ठु व्याहृतमार्यपुत्रेण । अन्यसंक्रान्तेष्वस्माकं भागधेयेषु यदि पुनः कुप्येयम्, ततो

नार्हति कृतापराधोऽप्युत्सवदिवसेषु परिजनो दण्डम् ।
इति मोचिते मयैते प्रणिपतितुं मामुपगते च ॥ १७ ॥

**इरावती**—[1]णिउणिए, गच्छ । देवीं विण्णावेहि । दिट्ठो भवदीए पक्खवादो णं अज्जत्ति ।

**निपुणिका**—[2]तह । (इति निष्क्रान्ता ।)

**विदूषकः**—(आत्मगतम् ।) [3]भो, अणत्थो संपडिदो । बन्धणब्भट्ठा गिहकवोदो बिडालिआए आलोए पडिदो ।

(प्रविश्य ।)

**निपुणिका**—(अपवार्य ।) [4]भट्टिणि, जदिच्छादिट्ठाए माहविआए आचक्खिदं एवं खु एदं णिव्वुत्तंति । (इति कर्णे कथयति ।)

**इरावती**—(आत्मगतम् ।) [5]उववण्णं । सच्चं अअं एत्थ ब्रह्मबन्धुणा किदो पओओ । (विदूषकं विलोक्य ।) इअं इमस्स कामतन्तसचिवस्स णीदी ।

---

१. निपुणिके, गच्छ । देवीं विज्ञापय । दृष्टो भवत्याः पक्षपातो नन्वद्येति ।

२. तथा ।

३. भोः, अनर्थः संपतितः । बन्धनभ्रष्टो गृहकपोतो बिडालिकाया आलोके पतितः ।

४. भट्टिनि, यदृच्छादृष्टया माधविकयाख्यातम् । एवं खल्वेतन्निर्वृत्तमिति ।

५. उपपन्नम् । सत्यमयमत्र ब्रह्मबन्धुना कृतः प्रयोगः । इयमस्य कामतन्त्रसचिवस्य नीतिः ।

---

हास्या भवेयम् ॥ **नार्हतीत्यादि** । स्पष्टोऽर्थः ॥ निपुणिके, गच्छ । देवीं विज्ञापय । दृष्टो भवत्याः पक्षपातो नन्वद्येति ॥ तथा ॥ भोः, अनर्थः संपतितः । बन्धनभ्रष्टो गृहकपोतः पारावतो बिडालिकाया आलोके पतितः ॥ भट्टिनि, यदृच्छादृष्ट्या माधविकयाख्यातम् । एवं खल्वेतन्निर्वृत्तमिति ॥ उपपन्नम् । सत्यमयमत्र ब्रह्मबन्धुना कृतः प्रयोगः । इयमस्य कामतन्त्रसचिवस्य नीतिः ॥ भवती, यदि नीतिगतमेक-

विदूषकः—[1]भोदि, जदि णीदिगदं एक्कवि अक्खरं पढेअं, णं मए अत्तभवं पेसिदो हवे ।

राजा—(आत्मगतम् ।) कथं नु खल्वस्मात्संकटादात्मानं मोचयिष्यामि ।

(प्रविश्य ।)

जयसेना—देवं[2], कुमारी वसुलच्छी कन्दुअं अणुधावन्ती पिङ्गलवाणरेण बलिअं तासिदा अङ्कणिसण्णा देवीए पवादकिसलअं विअ वेवमाणा ण किंवि पकिदिं पडिवज्जइ ।

राजा—कष्टम् । कातरो बालभावः ।

इरावती—(सावेगम् ।) [3]तुवरदु अज्जउत्तो णं समासासिदुं । मासे संतासजणिदो विआरो वड्ढदु ।

राजा—अयमेनां संज्ञापयामि । (इति सत्वरं परिक्रामति ।)

विदूषकः—[4]साहु रे पिङ्गलवाणर, साहु । परित्तादो तुए सपक्खो ।

(निष्क्रान्तौ राजा विदूषकश्च । इरावती निपुणिका प्रतीहारी च ।)

---

१. भवति, यदि नीतिगतमेकमप्यक्षरं पठेयम्, ननु मयात्रभवान्प्रेषितो भवेत् ।

२. देव, कुमारी वसुलक्ष्मीः कन्दुकमनुधावन्ती पिङ्गलवानरेण बलवत्रासिताङ्कनिषण्णा देव्याः प्रवातकिसलयमिव वेपमाना न किंचित्प्रकृतिं प्रतिपद्यते ।

३. त्वरतामार्यपुत्र एनां समाश्वासयितुम् । मास्याः संत्रासजनितो विकारो वर्धताम् ।

४. साधु रे पिङ्गलवानर, साधु । परित्रातस्त्वया स्वपक्षः ।

---

मप्यक्षरं पठेयम्, ननु मयात्रभवान्प्रेषितो भवेत् ॥ देव, कुमारी वसुलक्ष्मीः कन्दुकमनुधावन्ती पिङ्गलवानरेण बलवत्रासिताङ्कनिषण्णा देव्याः प्रवातकिसलयमिव वेपमाना न किंचित्प्रकृतिं प्रतिपद्यते ॥ त्वरतामार्यपुत्र एनां समाश्वासयितुम् । मास्याः संत्रासजनितो विकारो वर्धताम् ॥ साधु रे पिङ्गलवानर, साधु । परित्रात-

**मालविका**—हंला, देविं चिन्तिअ वेवदि मे हिअअं।[1] ण जाणे अदो वरं किं वा अणुहविदव्वं हविस्सदित्ति ।

(नेपथ्ये)

अच्चरिअं अच्चरिअं[2] । अपुण्णे एव्व पञ्चरत्ते दोहलस्स मुउलेहिं संणद्धो तवणीआसोओ । जाव देवीए णिवेदेमि ।

(उभे श्रुत्वा प्रहृष्टे ।)

**बकुलावलिका**—आससिदु[3] सही । सच्चप्पइण्णा देवी ।

**मालविका**—तेण[4] हि पमदवणपालिआए पुट्ठदो होमि ।

**बकुलावलिका**—तह[5] ।

(इति निष्क्रान्ते ।)

**इति चतुर्थोऽङ्कः ।**

---

१. सखि, देवीं चिन्तयित्वा वेपते मे हृदयम् । न जानेऽतः परं किं वानुभवितव्यं भविष्यतीति ।

२. आश्चर्यमाश्चर्यम् । अपूर्ण एव पञ्चरात्रे दोहदस्य मुकुलैः संनद्धस्तपनीयाशोकः । यावद्देव्यै निवेदयामि ।

३. आश्वसितु सखी । सत्यप्रतिज्ञा देवी ।

४. तेन हि प्रमदवनपालिकायाः पृष्ठतो भवावः ।

५. तथा ।

---

त्वया त्वपक्षः । अहमिति शेषः ॥ सखि, देवीं चिन्तयित्वा वेपते मे हृदयम् । न जानेऽतः परं किं वानुभवितव्यं भविष्यतीति ॥ आश्चर्यमाश्चर्यम् । अपूर्ण एव पञ्चरात्रे दोहदस्य मुकुलैः संनद्धस्तपनीयाशोकः । यावद्देव्यै निवेदयामि ॥ आश्वसितु सखी ॥ सत्यप्रतिज्ञा देवी । अत्र देव्यनुग्रहरूपकार्यसंग्रहणादादानं नाम संध्यङ्गमुक्तं भवति ॥ तेन हि प्रमदवनपालिकायाः पृष्ठतो भवावः ॥ तथा । इदं मालविकाकृतमुद्यानपालिकानुसरणमुत्तराङ्कोपयुक्तत्वाद्बिन्दुरित्यनुसंधेयम् ॥ **इति श्रीकाटयवेमभूपविरचिते कुमारगिरिराजीये मालविकाग्निमित्रव्याख्याने चतुर्थोऽङ्कः ॥**

## पञ्चमोऽङ्कः ।

(ततः प्रविशत्युद्यानपालिका ।)

**उद्यानपालिका**—उवक्खित्तो मए किदसक्कारविहिणो तवणीआसोअस्स वेदिआबन्धो । जाव अणुट्ठिदणिओअं अत्ताणं देवीए णिवेदेमि । (परिक्रम्य ।) अहो देवस्स अणुकम्पणीआ मालविआ । तस्सिं तह चण्डिआ देवी इमिणा असोअकुसुमवुत्तन्तेण पसादसुमुही हविस्सदि कहिं णु खु देवी हवे । (विलोक्य ।) अह्मो, एसो देवीए परिअणब्भन्तरो किंवि जदुमुद्दालञ्छिदं मञ्जूसं गेण्हिअ चदुस्सालादो कुज्जो सारसिओ णिक्कमदि । पुच्छिस्सं दाव णं । (उपसृत्य ।) सारसिअ, कहिं पत्थिदोसि ।

**सारसिकः**—महुअरिए, विज्जाभरिआणं वह्मणाणं णिच्छदक्खिणामाडिआ पुरोहिदस्स हत्थं पावइस्सं ।

---

१. उपक्षिप्तो मया कृतसत्कारविधिस्तपनीयाशोकस्य वेदिकाबन्धः । यावदनुष्ठितनियोगमात्मानं देव्यै निवेदयामि । अहो दैवस्यानुकम्पनीया मालविका । तस्यां तथा चण्डी देव्यनेनाशोककुसुमवृत्तान्तेन प्रसादसुमुखी भविष्यति । कुत्र न खलु देवी भवेत् । अहो, एष देव्याः परिजनाभ्यन्तरः किमपि जतुमुद्रालाञ्छितां मञ्जूषां गृहीत्वा चतुःशालातः कुब्जः सारसिको निष्क्रामति । प्रक्ष्यामि तावदेनम् । सारसिक, कुत्र प्रस्थितोऽसि ।

२. मधुकरिके, विद्याभरितानां ब्राह्मणानां नित्यदक्षिणामाडिका पुरोहितस्य हस्तं प्रापयिष्यामि ।

---

कविरिदानीमङ्कान्तरमारभमाणः यथासंघटनार्थं प्रथमं प्रवेशकं नामार्थोपक्षेपकं प्रस्तौति—**ततः प्रविशतीत्यादि** । उपक्षिप्तो मया कृतसत्कारविधिस्तपनीयाशोकस्य वेदिकाबन्धः । यावदनुष्ठितनियोगमात्मानं देव्यै निवेदयामि । अहो दैवस्यानुकम्पनीया मालविका । तस्यां तथा चण्डी देव्यनेनाशोककुसुमवृत्तान्तेन प्रसादसुमुखी भविष्यति । कुत्र नु खलु देवी भवेत् । अहो, एष देव्याः परिजनाभ्यन्तरः किमपि जतुमुद्रालाञ्छितां मञ्जूषां गृहीत्वा चतुःशालातः कुब्जः सारसिको निष्क्रामति । प्रवक्ष्यामि तावदेनम् । सारसिक, कुत्र प्रस्थितोऽसि ॥ मधुकरिके, विद्याभरितानां ब्राह्मणानां नित्यदक्षिणामाडिका निष्काणि पुरोहितस्य हस्तं प्राप-

**उद्यानपालिका**—[1]किंणिमित्तं ।

**सारसिकः**—[2]जदप्पहुदि सेणावदी जण्णतुरंगरक्खणे णिउत्तो भट्टिदारओ वसुमित्तो, तदप्पहुदि तस्स आऊसणिमित्तं णिक्कसदसुवण्णपरिमाणं दक्खिणं देवी दक्खिणीएहिं परिग्गाहेदि ।

**उद्यानपालिका**—[3]अह कहिं देवी । किं वा अणुचिट्ठदि ।

**सारसिकः**—[4]मङ्गलघरे आसणत्था भविअ विदब्भविसआदो भादुणा वीरसेणेण पेसिदं लेहं लेहकरेहिं वाइअमाणं सुणादि ।

**उद्यानपालिका**—को[5] उण विदब्भराअवुत्तन्तो सुणीअदि ।

**सारसिकः**—[6]वसीकिदो किल वीरसेणप्पमुहेहिं भत्तुणो विजअदण्डेहिं विदब्भणाहो मोइदो से दाआदो माहवसेणो । दूदो अ

१. किंनिमित्तम् ।

२. यदाप्रभृति सेनापतिर्यज्ञतुरंगरक्षणे नियुक्तो भर्तृदारको वसुमित्रः, तदाप्रभृति तस्यायुर्निमित्तं निष्कशतसुवर्णपरिमाणां दक्षिणां देवी दक्षिणीयैः परिग्राहयति ।

३. अथ कुत्र देवी । किं वानुतिष्ठति ।

४. मङ्गलगृह आसनस्था भूत्वा विदर्भविषयाद्भ्रात्रा वीरसेनेन प्रेषितं लेखं लेखकैर्वाच्यमानं शृणोति ।

५. कः पुनर्विदर्भराजवृत्तान्तः श्रूयते ।

६. वशीकृतः किल वीरसेनप्रमुखैर्भर्तुर्विजयदण्डैर्विदर्भनाथः । मोचितोऽस्य दायादो माधवसेनः । दूतश्च तेन महासाराणि रत्नानि वाहनानि शिल्पकारिकाभूयिष्ठं परिजनमुपायनीकृत्य भर्तुः सकाशं प्रेषित इति ।

यिष्यामि ॥ किंनिमित्तम् ॥ यदाप्रभृति सेनापतिर्यज्ञतुरंगरक्षणे नियुक्तो भर्तृदारको वसुमित्रः, तदाप्रभृति तस्यायुर्निमित्तं निष्कशतसुवर्णपरिमाणां दक्षिणां देवी दक्षिणीयैः परिग्राहयति । दक्षिणीयो दक्षिणार्हः । 'कडङ्करदक्षिणाच्छ च' इति छप्रत्ययः ॥ अथ कुत्र देवी । किं वानुतिष्ठति ॥ मङ्गलगृह आसनस्था भूत्वा विदर्भविषयाद्भ्रात्रा वीरसेनेन प्रेषितं लेखं लेखकैर्वाच्यमानं शृणोति । कः पुनर्विदर्भराजवृत्तान्तः श्रूयते ॥ वशीकृतः किल वीरसेनप्रमुखैर्भर्तुर्विजयदण्डैर्विदर्भनाथः ।

तेण महासाराणि रअणाणि वाहणाइ सिप्पआरिआभूइट्ठं परिअणं उवाअणीकरिअ भट्टिणो सआसं पेसिदोत्ति ।

**उद्यानपालिका**—अहं वि देवीए सआसं गच्छह्मि । तुमं वि अत्तणो णिओअं अणुचिट्ठ ।

(इति निष्क्रान्तौ ।)

**इति प्रवेशकः ।**

(ततः प्रविशति प्रतीहारी ।)

**प्रतीहारी**—आणत्तह्मि असोअसक्कारवावुदाए देवीए । विण्णावेहि अज्जउत्तेण सह असोअरुक्खस्स पसूणलच्छिं पच्चक्खीकादुंति । ता जाव धम्मासणगदं देवं पडिवालेमि । (इति परिक्रामति ।)

(नेपथ्ये वैतालिकाः ।)

**प्रथमः**—दिष्ट्या दण्डैरेव रिपुशिरःसु वर्तते देवः ।
परभृतकलव्याहारेषु त्वमात्तरतिर्मधुं
नयसि विदिशातीरोद्यानेष्वनङ्ग इवाङ्गवान् ।
विजयकरिणामालानत्वं गतैः प्रबलस्य ते
वरद वरदारोधोवृक्षैः सहावनतो रिपुः ॥ १ ॥

---

१. अहमपि देव्याः सकाशं गच्छामि । त्वमप्यात्मनो नियोगमनुतिष्ठ ।
२. आज्ञप्तास्म्यशोकसत्कारव्यापृतया देव्या । विज्ञापय आर्यपुत्रेण सहाशोकवृक्षस्य प्रसूनलक्ष्मीं प्रत्यक्षीकर्तुमिति । तद्यावद्धर्मासनगतं देवं प्रतिपालयामि ।

---

मोचितोऽस्य दायादो माधवसेनः । दूतश्च तेन महासाराणि रत्नानि वाहनानि शिल्पकारिकाभूयिष्ठं परिजनमुपायनीकृत्य भर्तुः सकाशं प्रेषित इति ॥ अहमपि देव्याः सकाशं गच्छामि । त्वमप्यात्मनो नियोगमनुतिष्ठ ॥ **ततः प्रविशतीत्यादि ।** आज्ञप्तास्म्यशोकसत्कारव्यापृतया देव्या । विज्ञापय आर्यपुत्रेण सहाशोकवृक्षस्य प्रसूनलक्ष्मीं प्रत्यक्षीकर्तुमिति । तस्माद्यावद्धर्मासनगतं देवं प्रतिपालयामि ॥ **परभृतेत्यादि ।** स्पष्टोऽर्थः ॥ **विरचितेति ।** क्रथकैशिकान्विदर्भदेशान्मध्ये-

**द्वितीयः—**

विरचितपदं वीरप्रीत्या सुरोपमसूरिभि-
श्चरितमुभयोर्मध्येकृत्य स्थितं क्रथकैशिकान् ।
तव हृतवतो दण्डानीकैर्विदर्भपतेः श्रियं
परिघगुरुभिर्दोर्भिर्विष्णोः प्रसह्य च रुक्मिणीम् ॥ २ ॥

**प्रतीहारी—**[1]एसो जअसद्दसूइदप्पत्थाणो भट्टा इदो एव्व आअच्छदि । अहं वि दाव इमस्स पमुहादो लोआदो ओसरिअ खम्भन्तरिदा होमि । (इत्येकान्ते स्थिता ।)

(प्रविश्य सवयस्यः ।)

**राजा—**

कान्तां विचिन्त्य सुलभेतरसंप्रयोगां
श्रुत्वा विदर्भपतिमानमितं बलैश्च ।
धाराभिरातप इवाभिहतं सरोजं
दुःखायते मम मनः सुखमश्नुते च ॥ ३ ॥

**विदूषकः—**[2]जह अहं पेक्खामि । एक्कन्तसुहिदो भवं हविस्सदि ।

**राजा—**कथमिव ।

**विदूषकः—**[3]अज्ज किल देवीए एव्वं पण्डितकौशिकी भणिदा ।

१. एष जयशब्दसूचितप्रस्थानो भर्तेत एवागच्छति । अहमपि तावदस्य प्रमुखाल्लोकादपसृत्य स्तम्भान्तरिता भवामि ।

२. यथाहं पश्यामि । एकान्तसुखितो भवान्भविष्यति ।

३. अद्य किल देव्यैवं पण्डितकौशिकी भणिता । भगवति, यत्त्वं प्रसाधनगर्वं वहसि, तद्दर्शय मालविकायाः शरीरे विवाहनैपथ्यमिति । तया सविशेषालंकृता मालविका । तत्रभवती कदाचित्पूरयेद्भवतोऽपि मनोरथम् ।

कृत्य । आक्रम्येत्यर्थः । 'मध्ये पदे निवचने च' इति गतिसंज्ञा । 'कुगतिप्रादयः' इति समासः । 'समासे नञ्पूर्वे क्त्वो ल्यप्' । शेषं स्पष्टम् ॥ एष जयशब्दसूचितप्रस्थानो भर्तेत एवागच्छति । अहमपि तावदस्य प्रमुखाल्लोकादपसृत्य स्तम्भान्तरिता भवामि ॥ **कान्तां विचिन्त्येत्यादि** । सुलभेतरसंप्रयोगामसुलभसमागमाम् । दुःखायते 'सुखादिभ्यः कर्तृवेदनायाम्' इति क्यच् । अत्र मालविकारूपबीजानुसंधानात्संधिर्नाम निर्वहणसंध्यङ्गमुक्तं भवति ॥ यथाहं पश्यामि । एकान्तसुखितो भवान्भविष्यति ॥

भअवदि, जं तुमं पसाहणगव्वं वहसि, तं दंसेहि मालविआए स-रीरे विवाहणेवच्छं ति । ताए सविसेसालंकिदा मालविआ । तत्तहोदी कदावि पूरए भवदोवि मणोरहं ।

राजा—सखे, मदपेक्षामनुप्राप्य अनया धारिण्या पूर्वाचरितैः संभाव्यत एवैतत् ।

प्रतीहारी—(उपगम्य ।) जेदु[1] भट्टा । देवी विण्णावेदि । तवणी-आसोअस्स कुसुमसमदंसणेण मह आरम्भो सफलो करीअदु त्ति ।

राजा—ननु तत्रैव तिष्ठति ।

प्रतीहारी—अह[2] इं । जहारहसंमाणसुहिअं अन्तेउरं विस-ज्जिअ मालविआपुरोएण अत्तणो परिअणेण सह देवं पडिवालेदि ।

राजा—(सहर्षं विलोक्य विदूषकम् ।) जयसेने, गच्छाग्रतः ।

प्रतीहारी—एदु[3] एदु देवो । (इति परिक्रामति ।)

विदूषकः—(विलोक्य ।) भो[4] वअस्स, किंचि परिवुत्तजोव्वणो विअ वसन्तो पमदवणे लक्खीअदि ।

---

१. जयतु भर्ता । देवी विज्ञापयति । तपनीयाशोकस्य कुसुमसहद-र्शनेन ममारम्भः सफलः क्रियतामिति ।

२. अथ किम् । यथार्हसंमानसुखितमन्तःपुरं विसृज्य मालविकापुरो-गेणात्मनः परिजनेन सह देवं प्रतिपालयति ।

३. एत्वेतु देवः ।

४. भो वयस्य, किंचित्परिवृत्तयौवन इव वसन्तः प्रमदवने लक्ष्यते

---

कथमिवेति प्रश्ने । अत्र कार्यान्वेषणाद्विरोधो नाम संध्यङ्गमुक्तं भवति ॥ अद्य किल देव्यैवं पण्डितकौशिकी भणिता । भगवति, यत्त्वं प्रसाधनगर्वं वहसि, तद्दर्शय माल-विकायाः शरीरे विवाहनैपथ्यमिति । तया सविशेषालंकृता मालविका । तत्रभवती धारिणी कदाचित्पूरयेद्भवतोऽपि मनोरथम् । अत्र कार्योपदर्शनात्पूर्वभाव इति संध्य-ङ्गमुक्तं भवति ॥ जयतु भर्ता । देवी विज्ञापयति । तपनीयाशोकस्य कुसुमसहदर्शनेन समारम्भः सफलः क्रियतामिति ॥ अथ किम् । यथार्हसंमानसुखितमन्तःपुरमव-रोधजनं विसृज्य मालविकापुरोगेणात्मनः परिजनेन सह देवं प्रतिपालयति ॥ एत्वेतु देवः ॥ भो वयस्य, किंचित्परिवृत्तयौवन इव वसन्तः प्रमदवने लक्ष्यते॥अग्रे

**राजा**—यथाह भवान् ।

अग्रे विकीर्णकुरवकफलजालकभिद्यमानसहकारम् ।
परिणामाभिमुखमृतोरुत्सुकयति यौवनं चेतः ॥ ४ ॥

**विदूषकः**—(परिक्रम्य ।) [1]अहो, अअं सो दिण्णणेवच्छो विअ कुसुमत्थवएहिं तवणीआसोओ । ओलोअदु भवं ।

**राजा**—स्थाने खलु प्रसवमन्थरोऽयमभूत् । यदिदानीमनन्यसाधारणीं शोभामुद्वहति । पश्य ।

सर्वाशोकतरूणां प्रथमं सूचितवसन्तविभवानाम् ।
निर्वृत्तदोहदेऽस्मिन्संक्रान्तानीव कुसुमानि ॥ ५ ॥

**विदूषकः**—[2]तह । भो, वीसद्धो होहि । अह्मेसु संणिहिदेसु विधारिणी पासपरिवट्टिणिं मालविअं अणुमण्णेदि ।

**राजा**—(सहर्षम् ।) सखे, पश्य ।

मामियमभ्युत्तिष्ठति देवी विनयादनुत्थिता प्रियया ।
विस्तृतहस्तकमलया नरेन्द्रलक्ष्म्या वसुमतीव ॥ ६ ॥

(ततः प्रविशति धारिणी मालविका परिव्राजिका विभवतश्च परिवारः ।)

**मालविका**—(आत्मगतम् ।) [3]जाणामि णिमित्तं कोदुआलंकारस्स ।

---

१. अहो, अयं स दत्तनेपथ्य इव कुसुमस्तबकैस्तपनीयाशोकः । अवलोकयतु भवान् ।

२. तथा । भोः, विस्रब्धो भव । अस्मासु संनिहितेष्वपि धारिणी पार्श्वपरिवर्तिनीं मालविकामनुमन्यते ।

३. जानामि निमित्तं कौतुकालंकारस्य । तथा मे हृदयं बिसिनीपत्रगतमिव सलिलं वेपते । अपि च दक्षिणेतरमपि मे नयनं बहुशः स्फुरति ।

---

**विकीर्णकुरवकेत्यादि** । स्पष्टोऽर्थः ॥ अहो, अयं स दत्तनेपथ्य इव कुसुमस्तबकैस्तपनीयाशोकः । अवलोकयतु भवान् ॥ **सर्वाशोकतरूणामित्यादि** । स्पष्टोऽर्थः ॥ तथा भोः, विस्रब्धो भव । अस्मासु संनिहितेष्वपि धारिणी पार्श्वपरिवर्तिनीं मालविकामनुमन्यते ॥ **मामियमिति** । स्पष्टोऽर्थः॥जानामि निमित्तं कौतुकालंका-

तह वि मे हिअअं बिसिणीपत्तगदं विअ सलिलं वेवदि । अविअ दक्खिणेदरं वि णअणं बहुसो फुरदि ।

**विदूषकः**—[1]भो वअस्स, विवाहणेवच्छेण सविसेसं खु सोहदि मालविआ ।

**राजा**—पश्याम्येनाम् । यैषा

अनतिलम्बिदुकूलनिवासिनी
बहुभिराभरणैः प्रतिभाति मे ।
उडुगणैरुदयोन्मुखचन्द्रिका
हतहिमैरिव चैत्रविभावरी ॥ ७ ॥

**देवी**—(उपेत्य ।) [2]जेदु अज्जउत्तो ।

**विदूषकः**—[3]वड्ढदु भोदी ।

**परिव्राजिका**—विजयतां देवः ।

**राजा**—भगवति, अभिवादये ।

**परिव्राजिका**—अभिप्रेतसिद्धिरस्तु ।

**देवी**—(सस्मितम् ।) [4]अज्जउत्त, एस ते अह्मेहिं तरुणीजणसहाअस्स असोओ संकेदघरो कप्पिदो ।

**विदूषकः**—[5]भो, आराहिओसि ।

---

१. भो वयस्य, विवाहनैपथ्येन सविशेषं खलु शोभते मालविका ।

२. जयत्वार्यपुत्रः ।

३. वर्धतां भवती ।

४. आर्यपुत्र, एष तेऽस्माभिस्तरुणीजनसहायस्याशोकः संकेतगृहं कल्पितः ।

५. भोः, आराधितोऽसि ।

---

रस्य । तथापि मे हृदयं बिसिनीपत्रगतमिव सलिलं वेपते । अपि च दक्षिणेतरमपि मे नयनं बहुशः स्फुरति ॥ भो वयस्य, विवाहनैपथ्येन सविशेषं खलु शोभते मालविका ॥ **अनतिलम्बीत्यादि** । स्पष्टोऽर्थः ॥ जयत्वार्यपुत्रः ॥ वर्धतां भवती ॥ आर्यपुत्र, एष तेऽस्माभिस्तरुणीजनहितस्याशोकः संकेतगृहं कल्पितः ॥ भोः, आरा-

**राजा**—(सव्रीडमशोकमभितः परिक्रामन् ।)

नायं देव्या भाजनत्वं न नेयः
सत्काराणामीदृशानामशोकः ।
यः सावज्ञो माधवश्रीनियोगे
पुष्पैः शंसत्यादरं त्वत्प्रयत्ने ॥ ८ ॥

**विदूषकः**—[1]भो, वीसद्धो भविअ तुमं जोव्वणवदिं इमं पेक्ख ।

**देवी**—[2]कं ।

**विदूषकः**—[3]भोदि, तवणीआसोअस्स कुसुमसोहम् ।

(सर्वे उपविशन्ति ।)

**राजा**—(मालविकां विलोक्य । आत्मगतम् ।) कष्टः खलु संनिधिवियोगः ।

अहं रथाङ्गनामेव प्रिया सहचरीव मे ।
अननुज्ञातसंपर्का धारिणी रजनीव नौ ॥ ९ ॥

(प्रविश्य ।)

**कञ्चुकी**—विजयतां देवः । देव, अमात्यो विज्ञापयति । विदर्भविषयोपायने द्वे शिल्पकारिके मार्गपरिश्रमादलघुशरे इति पूर्वं न प्रवेशिते । संप्रति देवोपस्थानयोग्ये संवृत्ते । तदाज्ञां देवो दातुमर्हतीति ।

**राजा**—प्रवेशय ते ।

**कञ्चुकी**—यदाज्ञापयति देवः । (इति निष्क्रम्य ताभ्यां सह प्रविश्य ।) इतो भवत्यौ ।

---

१. भोः, विस्रब्धो भूत्वा त्वं यौवनवतीमिमां पश्य ।
२. काम् ।
३. भवति, तपनीयाशोकस्य कुसुमशोभाम् ।

---

धितोऽसि ॥ **नायं देव्या इत्यादि** । स्पष्टोऽर्थः ॥ भोः, विस्रब्धो भूत्वा त्वं यौवनवतीमिमां पश्य ॥ काम् ॥ भवति, तपनीयाशोकस्य कुसुमशोभाम् ॥ **अहं रथाङ्गेत्यादि** । स्पष्टोऽर्थः ॥ सखि मदनिके, अपूर्वमिमं राजकुलं प्रविशन्त्याः प्रसी-

**प्रथमा**—[1]हला मदणिए, अपुव्वं इमं राअउलं पविसन्तीए पसीददि मे हिअअं ।

**द्वितीया**—[2]जोसिणीए, अत्थि खु लोअप्पवादो । आआमि सुहं दुक्खं वा हिअअसमवत्था कहेदित्ति ।

**प्रथमा**—[3]सो सच्चो दाणिं होदु ।

**कञ्चुकी**—एष देव्या सह देवस्तिष्ठति । उपसर्पतां भवत्यौ

(उभे उपसर्पतः ।)

(मालविका परिव्राजिका च चेट्यौ दृष्ट्वा परस्परमवलोकयतः ।)

**उभे**—(प्रणिपत्य ।) [4]जेदु भट्टा । जेदु भट्टिणी ।

(राजाज्ञया उभे उपविष्टे ।)

**राजा**—कस्यां कलायामभिविनीते भवत्यौ ।

**उभे**—[5]भट्टा, संगीदे अब्भन्तरह्म ।

**राजा**—देवि, गृह्यतामनयोरन्यतरा ।

**देवी**—[6]मालविए, इदो पेक्ख । कदरा ते संगीदसहआरिणी रुच्चदि ।

---

१. सखि मदनिके, अपूर्वमिमं राजकुलं प्रविशन्त्याः प्रसीदति मे हृदयम् ।

२. ज्योत्स्निके, अस्ति खलु लोकप्रवादः । आगामि सुखं दुःखं वा हृदयसमवस्था कथयतीति ।

३. स सत्य इदानीं भवतु ।

४. जयतु भर्ता । जयतु भट्टिनी ।

५. भर्तः, संगीतेऽभ्यन्तरे स्वः ।

६. मालविके, इतः पश्य । कतरा ते संगीतसहकारिणी रोचते ।

---

दति मे हृदयम् ॥ ज्योत्स्निके, अस्ति खलु लोकप्रवादः । आगामि सुखं दुःखं वा हृदयसमवस्था कथयतीति ॥ स सत्य इदानीं भवतु ॥ जयतु भर्ता । जयतु भट्टिनी ॥ भर्तः, संगीतेऽभ्यन्तरे स्वः ॥ मालविके, इतः पश्य । कतरा ते संगीतसहकारिणी

**उभे**—(मालविकां दृष्ट्वा ।) [1]अह्मो भट्टदारिआ । (इति प्रणम्य ।) जेदु जेदु भट्टदारिआ । (तया सह बाष्पं विकिरतः ।)

(सर्वे सविस्मयमवलोकयन्ति ।)

**राजा**—के वा भवत्यौ । का वा इयम् ।

**उभे**—[2]भट्टा, एसा अह्माणं भट्टदारिआ ।

**राजा**—कथमिव ।

**उभे**—[3]सुणादु भट्टा । जोसो भट्टिणा विजअदण्डेहिं विदब्भणाहं वसीकरिअ बन्धणादो मोइओ कुमारो माहवसेणो णाम, तस्स इअं कणीअसी भइणी मालविआ णाम ।

**देवी**—[4]कहं राअदारिआ इअं । चन्दणं खु मए पादुओवओएण दूसिदं ।

**राजा**—अथात्रभवती कथमित्थंभूता ।

**मालविका**—(निःश्वस्य । आत्मगतम् ।) [5]विहिणिओएण ।

**द्वितीया**—[6]भत्तुदाआदवसंगदे भट्टदारए माहवसेणे तस्स अम-

---

१. अहो भर्तृदारिका । जयतु जयतु भर्तृदारिका ।

२. भर्तः, एषास्माकं भर्तृदारिका ।

३. श्रृणोतु भर्ता । यः स भर्त्रा विजयदण्डैर्विदर्भनाथं वशीकृत्य बन्धनान्मोचितः कुमारो माधवसेनो नाम, तस्येयं कनीयसी भगिनी मालविका नाम ।

४. कथं राजदारिकेयम् । चन्दनं खलु मया पादुकोपयोगेन दूषितम् ।

५. विधिनियोगेन ।

६. भर्तृदायादवशंगते भर्तृदारके माधवसेने तस्यामात्येनार्यसुमतिनास्मादृशं परिजनमुज्झित्वा गूढमानीतैषा ।

---

रोचते॥अहो भर्तृदारिका । जयतु जयतु भर्तृदारिका ॥ भर्तः, एषास्माकं भर्तृदारिका श्रृणोतु भर्ता । यः स भर्त्रा विजयदण्डैर्विदर्भनाथं वशीकृत्य बन्धनान्मोचितः कुमारो माधवसेनो नाम, तस्येयं कनीयसी भगिनी मालविका नाम ॥ कथं राजदारिकेयम्। चन्दनं खलु मया पादुकोपयोगेन दूषितम् ॥ विधिनियोगेन ॥ भर्तृदायादव-

च्चेण अज्जसुमदिणा अह्मारिसं परिअणं उज्झिअ गूढं आणीदा एसा ।

**राजा**—श्रुतपूर्वं मयैतत् । ततस्ततः ।

**द्वितीया**—[1]भट्टा, अदो वरं ण आणीमो ।

**परिव्राजिका**—ततः परं मन्दभागिनी कथयिष्यामि ।

**उभे**—[2]अज्जकोसिईए विअ सरसंजोओ ।

**मालविका**—[3]णं सा एव्व ।

**उभे**—[4]जदिवेसधारिणी अज्जकोसिई दुक्खेण विभावीअदि । भअवदि, वन्दामो ।

**परिव्राजिका**—स्वस्ति भवतीभ्याम् ।

**राजा**—कथमाप्तवर्गोऽयं भगवत्याः ।

**परिव्राजिका**—एवमेतत् ।

**विदूषकः**—[5]तेण हि कहेदु भअवदी अत्तहोदीए उत्तन्तं असेसं ।

**परिव्राजिका**—(सवैक्लव्यम् ।) तावच्छ्रूयताम् । माधवसेनसचिवं ममाग्रजं सुमतिमवगच्छ ।

**राजा**—उपलक्षितम् । ततस्ततः ।

**परिव्राजिका**—स इमां तथागतभ्रातृकां मया सार्धमपवाह्य भवत्संबन्धापेक्षया पथिकसार्थं विदिशागामिनमनुप्रविष्टः ।

**राजा**—ततस्ततः ।

---

१. भर्तः, अतः परं न जानीमः ।

२. आर्यकौशिक्या इव स्वरसंयोगः ।

३. ननु सैव ।

४. यतिवेषधारिण्यार्यकौशिकी दुःखेन विभाव्यते । भगवति, वन्दावहे ।

५. तेन हि कथयतु भगवत्यत्रभवत्या वृत्तान्तमशेषम् ।

---

शंगते भर्तृदारके माधवसेने तस्यामात्येनार्यसुमतिनास्मादृशं परिजनमुज्झित्वा गूढमानीतैषा ॥ भर्तः,अतः परं न जानीमः ॥ आर्यकौशिक्या इव स्वरसंयोगः ॥ ननु सैव ॥ यतिवेषधारिण्यार्यकौशिकी दुःखेन विभाव्यते । भगवति, वन्दावहे ॥ तेन

परिव्राजिका—स चाटव्यन्तरे निविष्टो गताध्वा वणिग्जनः ।

राजा—किं चान्यत् ।

परिव्राजिका—ततः

तूणीरपट्टपरिबद्धभुजान्तराल-
मापार्ष्णिलम्बिशिखिपिच्छकलापधारि ।
कोदण्डपाणि विनदत्प्रतिरोधकाना-
मापातदुष्प्रसहमाविरभूदनीकम् ॥ १० ॥

(मालविका भयं रूपयति ।)

विदूषकः—[1]भोदि, मा भआहि । अदिक्कन्तं खु तत्तहोदी कहेदि ।

राजा—ततस्ततः ।

परिव्राजिका—ततो मुहूर्तं बद्धायुधास्ते पराङ्मुखीभूताः सार्थवाहयोद्धारस्तस्करैः ।

राजा—हन्त, इतः परं कष्टतरं श्रोतव्यम् ।

परिव्राजिका—ततः सुमतिः

इमां परीप्सुर्दुर्जाते पराभिभवकातराम् ।
भर्तृप्रियः प्रियैर्भर्तुरानृण्यमसुभिर्गतः ॥ ११ ॥

प्रथमा—[2]अहो, हदो सुमदी ।

---

१. भवति, मा बिभेहि । अतिक्रान्तं खलु तत्रभवती कथयति ।
२. अहो, हतः सुमतिः ।

---

हि कथयतु भगवत्यत्रभवत्या वृत्तान्तमशेषम् ॥ **तूणीरपट्टेत्यादि** । स्पष्टोऽर्थः॥ भवति, मा बिभेहि । अतिक्रान्तं खलु तत्रभवती कथयति ॥ **इमामित्यादि** । दुर्जात आपदि पराभिभवकातराम् । परेषां शत्रूणामभिभव आक्रमणं तस्मात्कातरां दुःखितामिमां मालविकां परीप्सुः पर्याप्तुं परित्रातुमिच्छुः । 'आप्ज्ञप्यृधामीत्' इतीत्वम् । 'अत्र लोपोऽभ्यासस्य' इत्यभ्यासलोपः 'पर्याप्तिः स्यात्परित्राणं हस्तधारणमित्यपि' इत्यमरः । भर्तृप्रियः स्वामिभक्तः । प्रियैरिष्टैरसुभिः प्राणैर्भर्तुरानृण्यमनृणत्वं गतः प्राप्तः ॥ अहो, हतः सुमतिः ॥ अतः खलु भर्तृदारि-

**द्वितीया**—[1]अहो खु भट्टिदारिआए इअं समवत्था संवुत्ता ।

(परिव्राजिका बाष्पं विसृजति ।)

**राजा**—भगवति, तनुत्यजामीदृशी लोकयात्रा । न शोच्यं तत्र-भवान्सफलीकृतभर्तृपिण्डः । ततस्ततः ।

**परिव्राजिका**—ततोऽहं मोहमुपगता यावत्संज्ञां लभे, ताव-दियं दुर्लभदर्शना संप्रवृत्ता ।

**राजा**—महत्खलु कृच्छ्रमनुभूतं भगवत्या ।

**परिव्राजिका**—ततो भ्रातृशरीरमग्निसात्कृत्वा पुनर्नवीभूतवैध-व्यदुःखया मया त्वदीयदेशमवतीर्य इमे काषाये गृहीते ।

**राजा**—युक्तः सज्जनस्यैष पन्थाः । ततस्ततः

**परिव्राजिका**—सेयमाटविकेभ्यो वीरसेनं वीरसेनाच्च देवीं गता देवीगृहे लब्धप्रवेशया दृष्टेत्येतदवसानं कथायाः ।

**मालविका**—[2]किं णु खु संपदं भट्टा भणादि ।

**राजा**—अहो परिभवोपहारिणो विनिपाताः । कुतः ।

प्रेष्यभावेन नामेयं देवीशब्दक्षमा सति ।
स्नानीयवस्त्रक्रियया पत्त्रोर्णं वोपयुज्यते ॥ १२ ॥

**देवी**—[3]भअवदि, तुए अभिजणवदिं मालविअं अणाचक्खन्तिए असंपदं किदम् ।

**परिव्राजिका**—शान्तं पापम् । केन च कारणेन मया नैर्घृ-ण्यमवलम्बितम् ।

---

१. अतः खलु भर्तृदारिकाया इयं समवस्था संवृत्ता ।
२. किं नु खलु सांप्रतं भर्ता भणति ।
३. भगवति, त्वयाभिजनवतीं मालविकामनाचक्षाणयासांप्रतं कृतम् ।

---

काया इयं समवस्था संवृत्ता ॥ किं नु खलु सांप्रतं भर्ता भणति ॥ **प्रेष्यभावेने-त्यादि** । देवीशब्दक्षमा देवीशब्दयोग्या सतीयं मालविका प्रेष्यभावेन परिचारक-त्वेन उपयुज्यते किल। पत्त्रोर्णं वा धौतकौशेयमिव । वेत्युपमायाम् ।'उपमायां विकल्पे

**देवी**—किं[1] विअ तं कारणम् ।

**परिव्राजिका**—इयं पितरि जीवति केनापि देवयात्रागतेन सिद्धादेशकेन साधुना मत्समक्षं समादिष्टा । संवत्सरमात्रमियं प्रेष्यभावमनुभूय ततः सदृशभर्तृगामिनी भविष्यतीति । तदेवंभाविनमादेशमस्यास्त्वत्पादशुश्रूषया परिणमन्तमवेक्ष्य कालप्रतीक्षया मया साधु कृतमिति पश्यामि ।

**राजा**—युक्ता प्रतीक्षा ।

**कञ्चुकी**—देव, कथान्तरेणान्तरितम् । अमात्यो विज्ञापयति । विदर्भगतमनुष्ठेयमनुष्ठितमभूत् । देवस्य तावदभिप्रायं श्रोतुमिच्छामीति ।

**राजा**—मौद्गल्य, तत्रभवतोर्यज्ञसेनमाधवसेनयोर्द्वैराज्यमिदानीमवस्थापयितुकामोऽस्मि ।

तौ पृथग्वरदाकूले शिष्टामुत्तरदक्षिणे ।
नक्तंदिवं विभज्योभौ शीतोष्णकिरणाविव ॥ १३ ॥

**कञ्चुकी**—देव, एवममात्यपरिषदे निवेदयामि ।

(राजाङ्गुल्यानुमन्यते ।)

(निष्क्रान्तः कञ्चुकी ।)

**प्रथमा**—(जनान्तिकम् ।) भट्टदारिए,[2] दिट्ठिआ भट्टिणा भट्टदारओ अद्धरज्जे पडिट्ठं गमइस्सदि ।

---

१. किमिव तत्कारणम् ।

२. भर्तृदारिके, दिष्ट्या भर्त्रा भर्तृदारकोऽर्धराज्ये प्रतिष्ठां गमयिष्यते ।

---

वा' इत्यमरसिंहः।स्नानीयवस्त्रक्रियया स्नानीयवस्त्रकरणेन॥भगवति,त्वयाभिजनवतीं मालविकामनाचक्षाणया सांप्रतमयुक्तं कृतम् ॥ किमिव तत्कारणम् ॥ **तौ पृथगित्यादि** । तौ यज्ञसेनमाधवसेनौ पृथक्पार्थक्येनोत्तरदक्षिणे वरदाकूले । वरदा नाम तत्रत्या नदी तस्याः कूले उभे तीरे शिष्टां रक्षताम् ॥ भर्तृदारिके, दिष्ट्या भर्त्रा

**मालविका**—ऍदं दाव वहु मणिदव्वं, जं जीविदसंसआदो मुत्तो।

(प्रविश्य।)

**कञ्चुकी**—विजयतां देवः। देव, अमात्यो विज्ञापयति। कल्याणी देवस्य बुद्धिः मन्त्रिपरिषदोऽप्येतदेव दर्शनम्। कुतः।

द्विधा विभक्तां श्रियमुद्वहन्तौ
धुरं रथाश्वाविव संग्रहीतुः।
तौ स्थास्यतस्ते नृपतेर्निदेशे
परस्परोपग्रहनिर्विकारौ॥ १४॥

**राजा**—तेन हि मन्त्रिपरिषदं ब्रूहि। सेनान्ये वीरसेनाय लेख्यतामेवं क्रियतामिति।

**कञ्चुकी**—यदाज्ञापयति देवः। (इति निष्क्रम्य सप्राभृतकं लेखं गृहीत्वा पुनः प्रविष्टः।) अनुष्ठिता प्रभोराज्ञा। अयं देवस्य सेनापतेः पुष्पमित्रस्य सकाशात्सोत्तरीयप्राभृतको लेखः प्राप्तः। प्रत्यक्षीकरोत्वेनं देवः।

(राजोत्थाय सप्राभृतकं लेखं सोपचारं गृहीत्वा परिजनायार्पयति।)

(परिजनो लेखं नाट्येनोद्घाटयति।)

**देवी**—(आत्मगतम्।) अह्महे, तदोमुहं एव्व णो हिअअं। सुणिस्सं दाव गुरुअणस्स कुसलाणन्तरं वसुमित्तस्स वुत्तन्तं। अदिघोरे खु पुत्तओ सेणावदिणा णिउत्तो।

---

१. एतत्तावद्बहु मन्तव्यम्, यज्जीवितसंशयान्मुक्तः।

२. अहो, ततोमुखमेव नो हृदयम्। श्रोष्यामि तावद्गुरुजनस्य कुशलानन्तरं वसुमित्रस्य वृत्तान्तम्। अतिघोरे खलु पुत्रकः सेनापतिना नियुक्तः।

---

भर्तृदारकोऽर्धराज्ये प्रतिष्ठां गमयिष्यते॥ एतत्तावद्बहु मन्तव्यम्, यज्जीवितसंशयान्मुक्तः॥ **द्विधा विभक्तामित्यादि**। स्पष्टोऽर्थः॥ अह्महे इति हर्षे। ततोमुखमेव नो हृदयम्। श्रोष्यामि तावद्गुरुजनस्य कुशलानन्तरं वसुमित्रस्य वृत्तान्तम्। अतिघोरे खलु पुत्रकः सेनापतिना नियुक्तः॥ **यज्ञशरणादित्यादि**। अत्र राज-

**राजा**—(उपविश्य लेखं सोपचारं गृहीत्वा वाचयति।) स्वस्ति। यज्ञशरणात्सेनापतिः पुष्पमित्रो वैदिशस्तत्रत्यमायुष्मन्तमग्निमित्रं स्नेहात्परिष्वज्येदमनुदर्शयति। विदितमस्तु। योऽसौ राजयज्ञदीक्षितेन मया राजपुत्रशतपरिवृतं वसुमित्रं गोप्तारमादिश्य वत्सरोपात्तनियमो निरर्गलस्तुरंगो विसृष्टः, स सिन्धोर्दक्षिणरोधसि चरन्नश्वानीकेन यवनेन प्रार्थितः। तत उभयोः सेनयोर्महानासीत्संमर्दः।

(देवी विषादं नाटयति।)

**राजा**—कथमीदृशं संवृत्तम्। (शेषं पुनर्वाचयति।)

ततः परान्पराजित्य वसुमित्रेण धन्विना।
प्रसह्य ह्रियमाणो मे वाजिराजो निवर्तितः॥ १५॥

**देवी**—[1]इमिणा आससिदं मे हिअअं।

**राजा**—(शेषं पुनर्वाचयति।) सोऽहमिदानीमंशुमता सगरपुत्रेणेव प्रत्याहृताश्वो यक्ष्ये। तदिदानीमकालहीनं विगतरोषचेतसा भवता वधूजनेन सह यज्ञसेवनायागन्तव्यमिति।

**राजा**—अनुगृहीतोऽस्मि।

**परिव्राजिका**—दिष्ट्या पुत्रविजयेन दम्पती वर्तेते।

भर्त्रासि वीरपत्नीनां श्लाघ्यानां स्थापिता धुरि।
वीरसूरिति शब्दोऽयं तनयात्त्वामुपस्थितः॥ १६॥

**देवी**—[2]भअवदि, परितुट्ठह्मि। जं पिदरं अणुजादो मे वच्छओ।

**राजा**—मौद्गल्य, ननु कलभेन यूथपतिरनुकृतः।

---

१. अनेनाश्वस्तं मे हृदयम्।
२. भगवति, परितुष्टास्मि। यत्पितरमनुजातो मे वत्सकः।

---

यज्ञो नामाश्वमेधः। राजपुत्रशतपरिवृतं राजपुत्राणां शतेन परिवेष्टितम्। तथा च श्रुतावश्वमेधप्रकरणे 'शतेन राजपुत्रैः सह' इति॥ **ततः परानित्यादि**। स्पष्टोऽर्थः॥ अनेनाश्वस्तं मे हृदयम्॥ **भर्त्रासीत्यादि**। स्पष्टोऽर्थः॥ भगवति, परितुष्टास्मि।

कञ्चुकी—देव, अयं कुमारः

नैतावता वीरविजृम्भितेन
चित्तस्य नो विस्मयमादधाति ।
यस्याप्रधृष्यः प्रभवस्त्वमुच्चै-
रग्नेरपां दग्धुरिवोरुजन्मा ॥ १७ ॥

राजा—मौद्गल्य, यज्ञसेनश्यालमूरीकृत्य मोच्यन्तां सर्वे बन्धनस्थाः ।

कञ्चुकी—यदाज्ञापयति देवः । (इति निष्क्रान्तः ।)

देवी—[1]जयसेणे, गच्छ । इरावदिप्पमुहाणं अन्तेपुराणं पुत्तस्स वुत्तन्तं णिवेदेहि ।

(प्रतीहारी प्रस्थिता ।)

देवी—[2]एहि दाव ।

प्रतीहारी—(परिवृत्य ।) [3]इअ ह्मि ।

देवी—(जनान्तिकम् ।) [4]जं मए असोअदोहएणिओए मालविआए पइण्णादं, तं से अदिजणं च णिवेदिअ मह वअणेण इरावदिं अणुणेहि । तुए अहं सच्चादो णविब्भंसिदव्वेत्ति ।

---

१. जयसेने, गच्छ । इरावतीप्रमुखेभ्योऽन्तःपुरेभ्यः पुत्रस्य वृत्तान्तं निवेदय ।

२. एहि तावत् ।

३. इयमस्मि ।

४. यन्मयाशोकदोहदनियोगे मालविकायै प्रतिज्ञातम्, तदस्या अभिजनं च निवेद्य मम वचनेनेरावतीमनुनय । त्वयाहं सत्यान्न विभ्रंशयितव्येति ।

---

यत्पितरमनुजातो मे वत्सकः ॥ **नैतावतेति** । स्पष्टोऽर्थः ॥ जयसेने,गच्छ।इरावतीप्रमुखेभ्योऽन्तःपुरेभ्यःपुत्रस्य वृत्तान्तं निवेदय॥एहि तावत्॥इयमस्मि॥यन्मयाशोकदोहदनियोगे मालविकायै प्रतिज्ञातम्॥तदस्या अभिजनं च निवेद्य मम वचनेने-

**प्रतीहारी**—¹जं देवी आणवेदि । (इति निष्क्रम्य पुनः प्रविश्य ।) भट्टिणि, पुत्तविजअणिमित्तेण परितोसेण अन्तेउराणं आहरणाणं मञ्जुसह्मि संवुत्ता ।

**देवी**—²एदं किं अच्चरिअं । साहारणो खु ताणं मह अ अअं अब्भुदओ ।

**प्रतीहारी**—(जनान्तिकम् ।) ³भट्टिणि, इरावदी उण विण्णवेदि । सरिसं देवीए पहवन्तीए । तुह वअणं संकप्पिदं ण जुज्जदि अण्णहा कादुं ति ।

**देवी**—⁴भअवदि, तुए अणुमदा इच्छामि अज्जसुमदिणा पढमसंकप्पिदं मालविअं अज्जउत्तस्स पडिवादेदुं ।

**परिव्राजिका**—इदानीमपि त्वमेवास्याः प्रभवसि ।

**देवी**—(मालविकां हस्ते गृहीत्वा ।) ⁵इदं अज्जउत्तो पिअणिवेदणाणुरूवं पारितोसिअं पडिच्छदु ।

(राजा व्रीडां नाटयति ।)

---

१. यद्देव्याज्ञापयति । भट्टिणि, पुत्रविजयनिमित्तेन परितोषेणान्तःपुराणामाभरणानां मञ्जूषास्मि संवृत्ता ।

२. एतत्किमाश्चर्यम् । साधारणः खलु तासां मम चायमभ्युदयः ।

३. भट्टिनि, इरावती पुनर्विज्ञापयति । सदृशं देव्याः प्रभवन्त्याः । तव वचनं संकल्पितं न युज्यतेऽन्यथाकर्तुमिति ।

४. भगवति, त्वयानुमतेच्छाम्यार्यसुमतिना प्रथमसंकल्पितां मालविकामार्यपुत्राय प्रतिपादयितुम् ।

५. इदमार्यपुत्रः प्रियनिवेदनानुरूपं पारितोषिकं प्रतीच्छतु ।

---

रावतीमनुनय । त्वयाहं सत्यान्न विभ्रंशयितव्येति॥यद्देव्याज्ञापयति । भट्टिनि, पुत्रविजयनिमित्तेन परितोषेणान्तःपुराणामाभरणानां मञ्जूषास्मि संवृत्ता॥एतत्किमाश्चर्यम् । साधारणः खलु तासां मम चायमभ्युदयः॥ भट्टिनि,इरावती पुनर्विज्ञापयति। सदृशं देव्याः प्रभवन्त्याः।तव वचनं संकल्पितं न युज्यतेऽन्यथाकर्तुमिति॥ भगवति, त्वयानुमतेच्छाम्यार्यसुमतिना प्रथमसंकल्पितां मालविकामार्यपुत्राय प्रतिपादयितुम्॥इदमार्यपुत्रः प्रियनिवेदनानुरूपं पारितोषिकं प्रतीच्छतु । अत्र प्रीत्युत्पादनात्प्र-

**देवी**—(सस्मितम्।) किं[1] अवधीरेदि अज्जउत्तो।

**विदूषकः**—[2]भोदि, एसो लोअव्ववहारो। सव्वो णववरो लज्जादुरो होदि।

(राजा विदूषकमपेक्षते।)

**विदूषकः**—[3]अह देवीए एव्व किदप्पणअविसेसं दिण्णदेवीसद्दं मालविअं अत्तभवं पडिग्गहीदुं इच्छदि।

**देवी**—[4]एदाए राअदारिआए अहिजणेण एव्व दिण्णो देवीसद्दो। किं पुणरुत्तेण।

**परिव्राजिका**—मा मैवम्।

अप्याकरसमुत्पन्नो रत्नजातिपुरस्कृतः।
जातरूपेण कल्याणि स हि संयोगमर्हति॥ १८॥

**देवी**—(स्मृत्वा।) [5]मरिसेदु भअवदी। अब्भुदअकहाए उइदं ण लक्खिदं। जअसेणे, गच्छ दाव। कोसेअपत्तोण्णजुअलं उवणेहि।

---

१ किमवधीरयत्यार्यपुत्रः।

२. भवति, एष लोकव्यवहारः। सर्वो नववरो लज्जातुरो भवति।

३. अथ देव्यैव कृतप्रणयविशेषां दत्तदेवीशब्दां मालविकामत्रभवान्प्रतिग्रहीतुमिच्छति।

४. एतस्या राजदारिकाया अभिजनेनैव दत्तो देवीशब्दः किं पुनरुक्तेन।

५. मर्षयतु भगवती। अभ्युदयकथयोचितं न लक्षितम्। जयसेने, गच्छ तावत्। कौशेयपत्रोर्णयुगलमुपनय।

---

सादो नाम संध्यङ्गमुक्तं भवति॥किमवधीरयत्यार्यपुत्रः॥ भवति, एष लोकव्यवहारः। सर्वो नववरो लज्जातुरो भवति॥ अथ देव्यैव कृतप्रणयविशेषां दत्तदेवीशब्दां मालविकामत्रभवान्प्रतिग्रहीतुमिच्छति॥एतस्या राजदारिकाया अभिजनेनैव दत्तो देवीशब्दः। किं पुनरुक्तेन॥ **अप्याकरेत्यादि**। स्पष्टोर्थः। अत्र लब्धार्थस्य स्थिरीकरणात्कृतिर्नाम संध्यङ्गमुक्तं भवति॥ मर्षयतु भगवती॥ अभ्युदयकथयोचितं न लक्षितम्। जयसेने, गच्छ तावत् कौशेयपत्रोर्णयुगलमुपनय॥यद्दे-

**प्रतीहारी**—¹जं देवी आणवेदि । (इति निष्क्रान्ता पत्रोर्णं गृहीत्वा प्रविश्य ।) देवि, एदम् ।

**देवी**—(मालविकामवगुण्ठनवतीं कृत्वा ।) ²अज्जउत्तो दाणिं इमं पडिच्छदु ।

**राजा**—त्वच्छासनात्प्रवृत्ता एव वयम् । (अपवार्य ।) हन्त, प्रतिगृहीता ।

**विदूषकः**—³अहो देवीए अणुऊलदा ।

(देवी परिजनमवलोकयति ।)

**परिजनः**—(मालविकामुपेत्य ।) ⁴जेदु भट्टिणी ।

(देवी परिव्राजिकां निरीक्षते ।)

**परिव्राजिका**—नैतच्चित्रं त्वयि ।

प्रतिपक्षेणापि पतिं सेवन्ते भर्तृवत्सलाः साध्व्यः ।
अन्यसरितामपि जलं समुद्रगाः प्रापयन्त्युदधिम् ॥ १९ ॥

(प्रविश्य ।)

**निपुणिका**—⁵जेदु भट्टा । इरावदी विण्णावेदि । जं उवआ-

---

१. यद्देव्याज्ञापयति । देवि, एतत् ।
२. आर्यपुत्र इदानीमिमां प्रतीच्छतु ।
३. अहो देव्या अनुकूलता ।
४. जयतु भट्टिनी ।
५. जयतु भर्ता । इरावती विज्ञापयति । यदुपचारातिक्रमेण तदा भर्त्रे अपराद्धा, तत्स्वयमेव भर्तुरनुकूलं नाम मयाचरितम् । सांप्रतं पूर्णमनोरथेन भर्त्रा प्रसादमात्रेण संभावयितव्येति ।

---

व्याज्ञापयति । देवि, एतत् ॥ आर्यपुत्र इदानीमिमां प्रतीच्छतु॥हन्त हर्षे । प्रतिगृहीता वशीकृता । अत्र वाञ्छितावाप्तेरानन्दो नाम संध्यङ्गमुक्तं भवति ॥अहो देव्या अनुकूलता ॥ जयतु भट्टिनी । अत्र बहुमानप्राप्तेर्भाषेति संध्यङ्गमुक्तं भवति ॥ **प्रतिपक्षेणेत्यादि** । स्पष्टोऽर्थः॥जयतु भर्ता। इरावती विज्ञापयति ।यदुपचारातिक्र

दिक्कमेण तदा भट्टिणो अवरद्धा, तं सअं एव्व भत्तुणो आणुऊलं
ाम मए आअरिदं । संपदं पुण्णमणोरहेण भत्तुणा पसादमेत्तेण
भावइदव्वत्ति ।

देवी—णिउणिए, अवस्सं से सेविदं अज्जउत्तो जाणिस्सदि ।[1]

निपुणिका—अणुगहीदह्मि ।[2]

परिव्राजिका—देव, अमुना युक्तसंबन्धेन चरितार्थं माधवसेनं भाजयितुं गच्छामः ।

देवी—भअवदीए ण जुत्तं अह्मे परिच्चइदुं ।[3]

राजा—भगवति, मदीयेष्वेव लेखेषु तत्रभवतस्त्वामुदिश्य सभाजनाक्षराणि पातयिष्यामः ।

परिव्राजिका—युवयोः स्नेहात्परवानयं जनः ।

देवी—अज्जउत्त, किं ते भूओ पिअं उवहरामि ।[4]

राजा—

त्वं मे प्रसादसुमुखी भव देवि नित्य-
मेतावदेव हृदये प्रतिपालनीयम् ।

---

१. निपुणिके, अवश्यमस्याः सेवितमार्यपुत्रो ज्ञास्यति ।

२. अनुगृहीतास्मि ।

३. भगवत्या न युक्तमस्मान्परित्यक्तुम् ।

४. आर्यपुत्र, किं ते भूयः प्रियमुपहरामि ।

---

मेण तदा भर्त्रे अपराद्धा, तत्स्वयमेव भर्तुरनुकूलं नाम ममाचरितम् । सांप्रतं पूर्णमनोरथेन भर्त्रा प्रसादमात्रेण संभावयितव्येति ॥ निपुणिके, अवश्यमस्याः सेवितमार्यपुत्रो ज्ञास्यति ॥ अनुगृहीतास्मि ॥ भगवत्या न युक्तमस्मान्परित्यक्तुम् ॥ आर्यपुत्र, किं ते भूयः प्रियमुपहरामि ॥ **त्वं मे प्रसादेत्यादि** । हे देवि, त्वं मे मम नित्यं सर्वदा प्रसादसुमुखी प्रसादेन प्रसन्नतया शोभनं मुखं यस्यास्तथोक्ता भव ... स्याः । एतावदेवेदमेव हृदये मनसि प्रतिपालनीयमपेक्षणीयम् । इतःपरं भरतवा-

(भरतवाक्यम् ।)

आशास्यमभ्यधिगमात्प्रभृति प्रजानां
संपद्यते न खलु गोप्तरि नाग्निमित्रे ॥ २०

(इति निष्क्रान्ताः सर्वे ।)

**इति श्रीकालिदासस्यकृतौ मालविकाग्निमित्रे पञ्चमोऽङ्कः ।**

---

क्यम् । **आशास्यमित्यादि** । प्रजानां जनानामभ्यधिगमात्संप्राप्तेः । परि
दित्यर्थः । तस्मात्प्रभृत्यारभ्याग्निमित्रेऽस्मिन्नायके गोप्तरि रक्षके सति तासांप्रज
माशास्यमपेक्ष्यवस्तु न संपद्यत इति न न संभवतीति न। संभवत्येवेत्यर्थः।अ
आशास्यसिद्धिकथनरूपेण शुभशंसनात्प्रशस्तिर्नाम संध्यङ्गमुक्तं भवति । यदुक्तं
'प्रशस्तिः शुभशंसनम्' इति । सर्वनाटकप्रयोगान्ते भरतेन सर्वकालसाधारणे
शीर्वचने कर्तव्ये सति अत्र प्रजानामाशास्यसिद्धिं प्रति गोप्तुरग्निमित्रस्य कथनं त
लराजोपलक्षणमिति मन्तव्यम् ॥ इति **श्रीकाटयवेमभूपविरचिते कु
रगिरिराजीये मालविकाग्निमित्रव्याख्याने पञ्चमोऽङ्कः ।**

श्रीमत्काटयवेमस्य कृतिर्विज्ञानशालिनः ।
कुमारगिरिराजीया जीयादाचन्द्रतारकम् ॥



